# अद्वैतसिद्धान्तसारसंग्रहः ।

श्रीमत्परमहंसपरिव्राजकाचार्य-

श्रीनारायणाश्रमविरचितः ।

स च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये निर्णयसागराख्यमुद्रणालये मुद्रयित्वा प्रकाशितः ।

शकाब्दाः १८५६, खिस्ताब्दाः १९३५.

मूल्यं ६ षडाणकाः ।

# उपोद्धातः ।

योयं प्रबन्धो मुद्राप्यते परमहंसपरिव्राजक–श्रीनारायणाश्रमविरचितः 'अद्वैतसिद्धान्तसारसंग्रहः' नाम. तत्रादावेव प्रतिज्ञातं 'अन्वयव्यतिरेकाद्यैरागमैरुपबृंहितैः । पञ्चोदाहृतिभिश्चात्मा शोधितो भवतीश्वरः ॥' इति. चतुर्विधैरन्वयव्यतिरेकैः आद्यपदोपात्तैश्च 'देहेन्द्रियादि स्वव्यतिरिक्तद्रष्टृकं दृश्यत्वात् घटवत्' इत्यादिभिरनुमानैः पञ्चभिश्चोदाहरणैरुपबृंहिता ये आगमाः, तैः शोधितस्त्वंपदार्थः प्रत्यगात्मा ईश्वर एव भवतीति तदर्थः. तत्र चतुर्विधावन्वयव्यतिरेकौ द्रष्टृदृश्ययोः, दुःखिप्रेमास्पदयोः, साक्षिसाक्ष्ययोः, अनुवृत्तव्यावृत्तस्वरूपयोश्चेति. तत्र च घटादीनामहंकारपर्यन्तानामनात्मनां द्रष्टृत्वेनान्वितश्चिदात्मा, तेभ्य एव च सर्वेभ्यो व्यतिरिक्तो द्रष्टृत्वादेवेति एका विधा. दुःखादिसंभिन्नेषु अहंकारादिषु अधिष्ठानतयाऽन्वितोप्यात्मा परमप्रेमास्पदत्वात् तद्व्यतिरिक्त एवेति द्वितीया विधा. सर्वेषु साक्ष्येष्वज्ञानादिषु साक्षितयाऽन्वितोयमात्मा वस्तुतस्तेभ्यो व्यतिरिक्त एवेति तृतीया विधा. चतुर्थी तु विधा स्थूलादिदेहानुभवितृत्वेन व्यावृत्तेष्वनुवृत्तोयमात्मा वस्तुतस्तेभ्यो व्यतिरिक्तः सन् निरवच्छिन्नब्रह्मात्मैवेति.

अथ पञ्चोदाहरणानि यान्युपन्यस्तानि तानीमानि भवन्ति. स्फटिकलौहित्योदाहरणं, रज्जुसर्पोदाहरणं, बिम्बप्रतिबिम्बोदाहरणं, घटाकाशोदाहरणं, सोयं देवदत्त इत्युदाहरणं चेति. तत्र प्रथमोदाहरणेनेदं साधनीयं, यथा स्फटिके भासमानमपि लौहित्यमौपाधिकत्वात् न सत्यं किंतु

मिथ्यैव तद्वत् चिदात्मनि भासमानमपि कर्तृत्वभोक्तृत्वादिकं बुद्ध्युपाधिनिमित्तकत्वात् मिथ्यैव न सत्यमिति. तेन चाकर्तुश्चिदात्मनः अकर्तृब्रह्मरूपता न विरुद्धेति.

अत्र चेयमाशङ्का—जपाकुसुमादेः संनिहितस्योपाधेः सत्त्वात् स्फटिके लौहित्याध्यासः संभवति. कर्तृत्वादिविशिष्टबुद्ध्याद्यध्यासं विना तु चिदात्मनि कथं कर्तृत्वाद्यध्यासः संभवति. नहि तत्र जपाकुसुमादिवत् कश्चिदन्य उपाधिरस्तीति. एतदाशङ्कानिरासद्वारा बुद्ध्याद्यध्याससाधनार्थं निरुपाधिकरज्जुसर्पाध्यासोदाहरणमुपन्यस्तम्. तेन च यथा रज्जौ निरुपाधिक एव सर्पाध्यासः एवं चिदात्मनि बुद्ध्याद्यध्यासः तन्मूलकश्च कर्तृत्वादिधर्माध्यासः. ततश्चाकर्तैव चिदात्मा अकर्तृब्रह्मरूपो भवितुमर्हतीति द्वितीयेन रज्जुसर्पोदाहरणेन साधितम्.

ननु जीवेश्वरयोर्भेदे भासमाने कथमभेदानुभवः प्रामाण्यमश्नुवीत ? अत्र बिम्बप्रतिबिम्बोदाहरणेन समाधानम्. यथा किल बिम्बप्रतिबिम्बयोर्भेदो न तात्त्विकः किंत्वौपाधिक एव तथा जीवेश्वरयोरपि भासमानो भेद आविद्यकत्वान्मिथ्यैवेति तयोरभेदानुभवस्य प्रमात्वे न दोषलेशोपीति तृतीयमुदाहरणम्.

चतुर्थोदाहरणं तु घटाकाशः. इदं चोदाहरणं चिदात्मनः संसर्गित्वशङ्कानिरासार्थं. धूमादिसंसर्गित्वेन भासमानोपि घटाकाशो यथा वस्तुतस्तत्संसर्गी न भवति तद्वत् चिदात्मापि संसारित्वेन संसर्गितया भासमानोपि वस्तुतः असङ्गब्रह्मरूप एवेति.

सोयं देवदत्त इत्यखण्डार्थकं वाक्यं पञ्चममुदाहरणम्. तत्त्वमस्यादिवाक्यात् प्रतिबन्धकरहितात् अखण्डब्रह्माभेदसाक्षात्कारो भवतीति प्रतिपादिते शङ्केयं समुन्मिषति, नैकमपि वाक्यमखण्डार्थकं संभवतीति. तत्रेदं 'सोयं देवदत्तः' इति वाक्यमखण्डार्थकत्वेनोदाहृतं, तत्त्वमसिवाक्यमपि तथैवाखण्डार्थकमिति सिद्धान्तितम्. 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिलक्षणवाक्यमपि भवत्यत्रोदाहरणं तत्तु पञ्चमोदाहरणान्तर्गतमेव न षष्ठत्वेन परिगणनार्हम्.

अथवा तत्त्वमसिवाक्यस्याखण्डार्थत्वसाधनार्थं यदुदाहृतं तत्सर्वमवान्तरप्रकरणन्यायेनैव नेयं. किं तर्हि पञ्चममुदाहरणमिति चेत् 'दशमस्त्वमसि' इत्येवेति ध्येयम्. तत्त्वमसिवाक्यात् अपरोक्षं ज्ञानं जायत इत्युक्ते शङ्केयं समुद्भवति. ननु शाब्दं ज्ञानं परोक्षमित्याचक्षते प्रामाणिकाः तथा सति कथं सर्वतन्त्रसिद्धान्तविरुद्धं शाब्दस्यापरोक्षत्वं स्वीक्रियते तत्रभवद्भिरिति. तत्र च समाधानं विस्तरेण दशमस्त्वमसीति पूर्वाचार्यैरुदाहृतमेव वाक्यमुपन्यस्य क्रियते इति दशमस्त्वमसीत्येव पञ्चममुदाहरणम्.

नन्वग्रिमग्रन्थे तप्तपरशुदृष्टान्तमुपन्यस्य सत्याभिसन्धस्यैव मोक्षो नानृताभिसन्धस्य, द्वैतजातं चानृतमेवेत्युक्तं. तत्र पुनः भेदे जाग्रति कथं द्वैतमनृतमित्युच्यत इत्याशङ्क्य सपरिवारो भेदः खण्डितः, तथाच पञ्चममुदाहरणमिदमेव कस्मान्न स्यात्? बाढं तत्तूदाहरणं श्रुतिस्थमेव. यानि तूदाहरणानि पञ्चेत्युक्तमुपक्रमश्लोके तानि किल केवललौकिकान्येवागमोपबृंहकत्वेनोक्तानि. तथा च श्रुत्यनुक्तान्येवोदाहरणान्यभिप्रेतान्यत्र. तप्तपरशुस्तु श्रुत्युक्त एवेति न स पञ्चममुदाहरणम्.

तदिदं सर्वं ग्रन्थ एव स्पष्टं. स चायमनतिविस्तरोपि निबन्धः कण्टकावृतिवत् मतान्तरशङ्कापशुभ्यो रक्षति चाखण्डब्रह्मात्मतामननामोदजननीं माधवीं लतां, माधवीलतेव च वितरति अखण्डब्रह्मात्मतामोदमिति नितान्तं संग्राह्यश्च पठनीयश्चाभ्यसनीयश्चार्थतोनुभाव्य श्चेति शिवम् ।

स्वामी केवलानन्दः ।

# प्रस्तावना ।

इह खलु सत्स्वप्यनेकेषु शास्त्रेषु ब्रह्मविद्यापराख्यमध्यात्मशास्त्रमेव निःश्रेयससाधनतया श्रेष्ठं परमुपादेयं चेति श्रुतिस्मृतिभिश्चैकमत्येनोद्घुष्यते । अत एव मुण्डकोपनिषदि "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।" इत्यध्यात्मशास्त्रस्यैव पराविद्यात्वेन निर्देशः कृतः ।

सेयं ब्रह्मविद्याऽतिप्राचीनकाले प्रथममुपनिषत्सु प्रतिष्ठिता । ततो महाभारतान्तर्गतभगवद्गीतासनत्सुजातीयादिप्रकरणेषु अन्येषु च ग्रन्थेषु संक्षेपतस्तत्सिद्धान्तसारः संगृहीतः । तदनु श्रीभगवता बादरायणेन शारीरकसूत्रापराभिधाने ब्रह्मसूत्रग्रन्थे मीमांसान्यायपद्धत्योपनिषद्गतजीवब्रह्मविषयकानेकवाक्यार्थविचारेण जीवब्रह्मैक्यसिद्धान्तः प्रस्थापितः । ततः श्रीगौडपादाचार्यैर्माण्डूक्योपनिषत्कारिकाः प्रणीताः । एवं श्रीशङ्कराचार्यैरुपनिषद्भगवद्गीताब्रह्मसूत्राणामुपरि भाष्याणि तथा श्रीमत्सुरेश्वराचार्यैर्बृहदारण्यकादिभाष्योपरि बृहद्वार्तिकादिग्रन्था निर्मिताः । ततः श्रीपद्मपाद–वाचस्पतिमिश्र–आनन्दगिरि–अद्वैतानन्दाचार्य–प्रभृतिभिर्ब्रह्मसूत्रभाष्योपरि पञ्चपादिका–भामती–न्यायनिर्णय–ब्रह्मविद्याभरणादिकाष्टीकाः प्रणीताः । अनन्तरमन्यैः शास्त्रनिपुणैरुक्तटीकानामुपर्यपि टीका विरचिताः । तासां सर्वासां नामान्यत्र स्थलसंकोचात्प्रयोजनाभावाच्च नोच्यन्ते ।

तदनु च सूक्ष्मदर्शिनो वेदान्तशास्त्रविशारदा विरुद्धमतवादिनां शङ्कानिराकरणेन वेदान्तसिद्धान्तविशदीकरणार्थं तत्तत्काले स्वतन्त्रान् बहून् बृहतो ग्रन्थान्विरचयामासुः । तथाहि—श्रीमण्डनमिश्राः ब्रह्मसिद्धिं, श्रीसुरेश्वराचार्या नैष्कर्म्यसिद्धिं, श्रीसर्वज्ञमुनयः संक्षेपशारीरकं, श्रीविमुक्तात्माचार्या इष्टसिद्धिं, श्रीहर्षमिश्राः खण्डनखण्डखाद्यं, श्रीमदानन्दबोधाचार्या न्यायमकरन्दं, श्रीमदानन्दगिरिस्वामिनस्तर्कसंग्रहं, श्रीमद्विद्यारण्याः पञ्चदशीं, श्रीनृसिंहाश्रमा अद्वैतदीपिकां, श्रीमदप्पय्यदीक्षिताः सिद्धान्तलेशं, श्रीमधुसूदनसरस्वत्योऽद्वैतसिद्धिं, श्रीकृष्णानन्दसरस्वत्यः सिद्धान्तसिद्धाञ्जनं प्रणिन्युः । एतेऽन्ये चात्रानुक्ता ग्रन्था अद्वैतसिद्धान्तविरोधिसांख्यनैयायिकमीमांसकबौद्धादिपूर्वपक्षखण्डनात्मकत्वात् दुरूहतर्कजटिलप्रौढवाक्सरणिनिबद्धा विविधविवरणटीकादिपरिष्कृता अद्य पण्डितमण्डलीलोचनगोचरा वर्तन्ते ।

एवमेव लघुशरीरा अप्यतिगभीराशयाः प्रमाणमाला, भेदधिक्कारः, तत्त्वविवेकः, तत्त्वानुसंधानं, अद्वैतरत्नरक्षणं, अद्वैतकल्पलतिका, अद्वैतचिन्तामणिः, स्वाराज्यसिद्धिः इत्यादयः शतशो निबन्धा विद्वद्भिः प्रणीता उपलभ्यन्ते । इत्थमयमद्वैतशास्त्रग्रन्थरत्नाकरः परं विस्तारमापन्नः सुदुस्तर इव समुल्लसति ।

निरुक्तग्रन्थेषु बहवो निबन्धाः काशीकलकत्तामुम्बापुरादिनगरेषु तैस्तैर्विद्वद्वरैः संशोधनपुरःसरं प्राकाश्यं नीत्वा महानुपकारः कृतः खलु गीर्वाणविद्यारसिकेषु ।

तादृशनिबन्धेष्वेकमिदं ग्रन्थरत्नं "अद्वैतसिद्धान्तसारसंग्रहो" नाम यदद्यावध्यप्रकाशितं निगूढमिवासीत् । तत्संप्रति महता यत्नेन संशोध्य विद्वद्विनोदाय प्रकाश्यते । अयमद्वैतसिद्धान्तसारसंग्रहः श्रीमन्नारायणा-

श्रमैर्विरचित इति ग्रन्थस्य पुष्पिकातः स्फुटीभवति । अन्येषां प्राचीन-ग्रन्थकर्तॄणामिवैतेषामपि देशकालजीवनवृत्तादिकं सम्यङ्न ज्ञायते । अतो ग्रन्थान्तरावलोकनेन संकलितं यत्किञ्चिद्वृत्तमत्रोपन्यस्यते ।

श्रीमन्नारायणाश्रमाणां गुरवः पण्डितधुरीणा नृसिंहाश्रमाः । ते प्रायेण काशीक्षेत्रनिवासिनः क्रिस्तशकस्य १५२५–१६०० वर्षेषु आसन् । एते स्ववैदुष्यसामर्थ्याद्व्याकरणमीमांसावेदान्ताद्यनेकशास्त्रनिपुणान् शैवविशिष्टाद्वैतनिष्णातान्दाक्षिणात्यपण्डितानप्पय्यदीक्षिताभिधानाद्वैतवेदान्तनिष्ठानकुर्वन्निति किंवदन्ती समस्ति ।

एतैर्नृसिंहाश्रमैर्निम्नलिखिता ग्रन्था विरचिताः—

१ अद्वैतदीपिका—पण्डितापराख्य-काशीविद्यासुधानिधिमासिक-पुस्तकेऽसंपूर्णा मुद्रिता ।
२ अद्वैतपञ्चरत्नम् ।
३ अद्वैतबोधदीपिका ।
४ अद्वैतरत्नकोशः ।
५ अद्वैतवादः ।
६ तत्त्वबोधिनी संक्षेपशारीरकटीका ।
७ तत्त्वविवेकः—काश्यां पण्डितमासिके मुद्रितः ।
८ पञ्चपादिकाविवरणप्रकाशिका ।
९ भेदधिक्कारः—चौखम्बाग्रन्थमालायां मुद्रितोऽयं सटीकः ।
१० वाचारम्भणम् ।
११ वेदान्तविवेकः ।

प्रकृतनिबन्धकर्तारः श्रीमन्नारायणाश्रमाः श्रीनृसिंहाश्रमशिष्यत्वात्त-

त्समकालीना एवेति निर्विवादम् । एतेषां समयः क्रिस्तशकस्य १५१७–१६०० वर्षाणीति केचित् । एतन्मतमपि श्रीनारायणाश्रमाणां श्रीनृसिंहाश्रमसमकालीनत्वस्यैवोपोद्बलकम् ।

श्रीनारायणाश्रमैः प्रणीता ग्रन्थास्त्वेते—

१ अद्वैतदीपिकाविवरणम्—पण्डितमासिकेऽपूर्णं मुद्रितम् ।

२ भेदधिक्कारसत्क्रिया—चौखम्बाग्रन्थमालायां मूलेन सह मुद्रिता ।

३ नारायणाश्रमीयम् ।

४ अद्वैतसिद्धान्तसारसंग्रहः—संप्रति निर्णयसागरमुद्रणालये मुद्रितोऽयं प्रकृतग्रन्थः ।

उपर्युक्तेऽस्मिन्नल्पेऽपि ग्रन्थे वेदान्तशास्त्रसिद्धान्ताः प्रौढतर्कसरण्याऽप्रत्याख्येययुक्तिदृष्टान्तोपन्यासपूर्वकं प्रतिपादिता इति विदुषां विशदमेवैतत् ।

अस्य ग्रन्थस्यैकं हस्तलिखितपुस्तकं संप्रति दिवंगतैर्मुम्बानगरवास्तव्यैर्वेदान्तादिशास्त्रविशारदैः बी. ए. इत्युपपदधारिभिरस्मत्सुहृद्भिः श्रीमद्भिः "तनुसुखराम मनःसुखराम त्रिपाठी" इत्येतैस्त्रिंशद्वर्षेभ्यः पूर्वं मह्यं दत्तमासीत् । तच्चातीव जीर्णं प्रायःशुद्धं क्वचित्त्रुटितं चासीत् ।

अस्यादर्शपुस्तकस्यान्ते प्रतिकृतिकर्त्रा लिखितं यथा—

"संवत् १६२७ वर्षे बहुधान्यसंवत्सरे ।
आषाढस्यासिते पक्षे त्रयोदश्यां गुरौ दिने ।
लिखितं हरिणा काश्यां विश्वेशप्रीतये मया ॥" इति ।

तस्मान्मूलादर्शपुस्तकं संवत् १६२७ वर्षे अर्थात् १५७१ क्रिस्ताब्दे हरिनाम्ना लेखकेन काश्यां लिखितमिति स्पष्टं भवति । अत इदमादर्श-

पुस्तकं श्रीमन्नारायणाश्रमाणां जीवितकाले एव लेखकेन लिखितं तथा प्रस्तुतप्रकरणं १५७१ क्रिस्तवर्षादपि प्राग्विरचितमासीदिति सुवचम् ।

एतद्ग्रन्थसंशोधनाय पुस्तकान्तरप्राप्त्यर्थं कृतप्रयत्नोऽपि नाप्नुवं यशः । ततः पुस्तकान्तराभावाद्यथामति संशोध्य मया मुद्रणार्थं तस्यैकं प्रतिरूपकं कृतम् । अनन्तरं त्रिचतुरसंवत्सरेभ्यः प्राक् तत्प्रतिरूपकं श्रीमद्भ्यो वेदान्तविशारदेभ्यः संप्रति मुम्बापुरनिकटवर्तिखाराख्योपनगरस्थश्रीरामकृष्णपरमहंसमठाधिकारिभ्यः श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गुणातीतानन्दस्वामिभ्यः समर्पितम् । उक्तस्वामिनस्तद्ग्रन्थस्य परमोपादेयतामालोच्य तत्प्रकाशनार्थं मुम्बानगरस्थनिर्णयसागराधिपतीन् श्रीपाण्डुरङ्गजावजीश्रेष्ठिनः समादिशन् । तैश्च प्राचीनगीर्वाणग्रन्थप्रकाशने बद्धपरिकरैरयं ग्रन्थो निरपेक्षबुद्ध्या मुद्रयित्वा प्रकटीकृत इति तेभ्यो धन्यवादान् दातुमुत्सहे ।

पाठकजनसौकर्यार्थं विषयानुक्रमणी तथा श्रुतिस्मृत्यादिमूलस्थाननिर्देशपत्रिका चात्र निवेशिता । अत्र मुद्रणाद्यनवधानजन्यदोषाः सहृदयैः सुधीभिः क्षन्तव्या इति सविनयं प्रार्थयते

विद्वदनुचरः

कारवारपुरे<br>शकाब्दाः १८५६<br>पौष शु. १३

तेलङ्गोपाह्वो रामकृष्णसूनुः<br>मङ्गेशशर्मा ।

# अद्वैतसिद्धान्तसारसंग्रहग्रन्थस्य

## विषयानुक्रमणी।

विषयाः पृष्ठाः

॥ श्रीः ॥



श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमविरचितः

# अद्वैतसिद्धान्तसारसंग्रहः ।

ध्यात्वा विश्वेश्वरं नत्वा गुरूनालोच्य तत्कृतान् ।
ग्रन्थानद्वैतसिद्धान्तसारसङ्ग्रह उच्यते ॥ १ ॥
अन्वयव्यतिरेकाद्यैरागमैरुपबृंहितैः ।
पञ्चोदाहृतिभिश्चात्मा शोधितो भवतीश्वरः ॥ २ ॥

अत्राद्यपदोपात्तैः 'देहेन्द्रियादि स्वव्यतिरिक्तद्रष्टृकं दृश्यत्वात् घटवत्', 'आत्मा सुखरूपः परमप्रेमास्पदत्वात् व्यतिरेकेण दुःखादिवत्', 'दुःखादिधर्मी न स्वद्रष्टा दृश्यत्वात् घटवत्', 'आत्मा सर्वगतः उपाधिपरामर्शे सत्येव परिच्छिन्नप्रतिभासत्वात् गगनवत्', 'आत्मा स्वस्मिन्द्रव्यत्वव्याप्यजातिबाधकाभेदवान् विभुत्वात् उपाधिपरामर्शं विना तादृशजातिसाधकभेदवत्त्वेनानुपलभ्यमानत्वात् वा गगनवदेव' इत्याद्यनुमानैर्वक्ष्यमाणचतुर्विधान्वयव्यतिरेकाभ्यां पञ्चोदाहरणैश्च वक्ष्यमाणैरुपबृंहिताः स्वार्थे संभावनाधीजननेनासंभावनादिप्रतिबन्धरहिततां प्रापिता ये आगमाः 'न दृष्टेर्द्रष्टारं पश्येः', 'सलिल एको द्रष्टा', 'चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा', 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति', 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा', 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः', 'स यत्तत्र किंचित्पश्यत्यनन्वाग-

तस्तेन भवति', 'असङ्गो ह्ययं पुरुषः', 'आत्मैवास्य ज्योतिः', 'अत्रायं पुरुषः स्वयंज्योतिः', 'मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी', 'त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥', 'आकाशवत्सर्वगतश्च नित्यः', 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति', 'एको देवः सर्वभूतेषु गूढः', 'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥', 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥', 'विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् । असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥ गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा' इत्याद्याः श्रुतिस्मृतिरूपाः, तैः शोधितः सर्वोपप्लवरहितः सदानन्दचिद्घनतयावधारितः प्रत्यगात्मा 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते', 'शश्वत्प्रशान्तमभयं प्रतिबोधमात्रम् । शुद्धं समं सदसतः[1] परमात्मतत्त्वम् ॥' इत्यादिश्रुतिस्मृतिसिद्धोक्तस्वभावब्रह्मात्मतयैव तत्त्वमादिमहावाक्यैः, जीवो ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगिभेदप्रतियोगी चेतनत्वात् ब्रह्मवत्, ब्रह्म वा जीवे स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगिभेदप्रतियोगि तत एव जीववत्, जीवभेदो वा ब्रह्मभेदो वा ब्रह्मणि जीवे वा स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगी भेदत्वात् ब्रह्मभेदवत् जीवभेदवत् वा, इत्याद्यनुमानानुगृहीतैः शास्त्रीयश्रवणाद्यधिकारिणं मुमुक्षुं प्रति निर्विचिकित्सं निर्णीयते ।

तत्रान्वयव्यतिरेकयोश्चातुर्विध्यं द्रष्टृदृश्यभावेन, दुःखिप्रेमास्पदभावेन, साक्षिसाक्ष्यभावेन, अनुवृत्तव्यावृत्तभावेन च भवति ।

---

१ सत्=व्याकृतमाकाशादि । असत्=अव्याकृतं मूलप्रकृतिः ।

तत्राद्येन करणव्यापारद्वारा दृश्यानां जडानां परस्परव्यभिचारिणां देहाद्यहङ्कारपर्यन्तानां द्रष्टा एकश्चिदात्मा वस्तुतो दृश्यतादात्म्यतद्धर्मरहितस्तदसङ्गी संभाव्यते । घटादिद्रष्टरि तद्दर्शनात् । इतरथैकत्र कर्तृकर्मभावविरोधात् ।

द्वितीयेन तु परमप्रेमास्पदतया सुखैकतानस्यात्मनो दुःखादिपरिणामिनोऽहङ्कारादेर्विवेकोऽवधार्यते । तथाहि—दुःखादिदशायामपि सदा भूयासमित्यात्मनि प्रेमा सर्वजनीनः । स च तस्य न सुखदुःखाभावाश्रयतया, तदा तयोरभावात् । न च कालान्तरीयसुखाद्याश्रयत्वानुसंधानेन तदापि तदुपपत्तिरिति वाच्यम् । तयोरप्यात्मीयत्वेन प्रेमास्पदतया स्वतन्त्रात्मनस्तद्गोचरत्वावश्यंभावात् । इतरथात्मनोऽनिष्टत्वे परकीय इव स्वकीयेऽपि सुखादौ प्रेमानुपपत्तेः । अत एव "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतिरात्मशेषत्वेनैव सर्वस्य प्रियत्वमाह । ततश्चात्मप्रेमप्रयुक्तः सुखादिप्रेमा वक्तव्यः । तथा च तत्प्रेम्णा तदाश्रयात्मनि प्रेमेत्युपगमे परस्पराश्रयापत्तिर्दुर्वारा स्यात् । तस्मात्सुखप्रकाशात्मतयैवात्मनि निरुपाधिकप्रेमेति । तत्र स्वतो दुःखादिसंभेदासंभवात् तद्धर्म्यहङ्कारादेर्विविक्तोऽयमात्मेति तस्य "तदेतत्प्रेयः" इत्यादिश्रुतिप्रमितसुखरूपत्वं सिद्धम् ।

तृतीयेन चाज्ञानान्तःकरणतद्धर्मस्वप्नमनोरथादीनां मानागोचराणां प्रतिभासमात्रशरीराणां भावाभावसाधकतया साक्षी कूटस्थश्चिन्मात्रो वस्तुतो नाज्ञानादिसंभेदवानात्मेति संभाव्यते । तत्राज्ञानस्य 'त्वदुक्तमर्थं न जानामि' इत्याद्याकारेण नियमेन सविषयस्यैवानुभवात्, स्वसमानविषयप्रमाणज्ञानविरोधिनस्तस्य प्रमाणभास्यत्वायोगात् साक्षिमात्रसिद्धतोपेया ।

---

१ सुखदुःखाभावयोः । २ उत्पत्तिविनाशहेतुत्वेन ।

अत एव ज्ञानाभाव एवाज्ञानमिति परास्तम् । सति विषयज्ञाने तदभावासंभवादेवोक्तानुभवायोगात् ।

ननु सामान्यतो ज्ञाते विशेषज्ञानाभावस्तथानुभूयत इति चेन्न । विशेषरूपानवगतौ तद्विशेषितप्रतियोगिज्ञानाभावेन तदभावरूपाज्ञानानुभवानुपपत्तेः । तदवगतौ च तदभावरूपाज्ञानमेव नेति कथमुक्तशब्दप्रत्ययौ भवेताम् । किंच, न तावद्विशेषज्ञानप्रागभाव एवोक्तानुभवविषयः, यस्य यद्विशेषानुभवः कदापि न भविष्यति तस्मिंस्तत्प्रागभावाभावेन तस्य तन्न जानामीत्यननुभवप्रसङ्गात् । विशेषज्ञानध्वंसस्यैव तदनुभवविषयत्वे च यस्य पूर्वं तदनुभवो नोत्पन्नस्तस्य तदभावात् तदज्ञानानुभवो न स्यात् । स्याच्च पूर्वानुभूते विषये न जानामीत्यनुभवः । विशेषज्ञानात्यन्ताभावस्यैवाज्ञानानुभवगोचरत्वेऽपि [1]तत्प्रागभावादिमतस्तदभावान्न जानामीत्यनुभवो न स्यात् । न च क्वचित्कदाचित् कश्चित्तदभावो न जानामीत्यनुभवालम्बनमिति वाच्यम् । एकाकारानुभवस्यानुगतैकालम्बनं विनानुपपत्तेः, संसर्गाभावस्यापि प्रागभावाद्यननुगतस्यैकस्यानिरूपणात्, अहमज्ञो न जानामीत्यादिरूपेण ज्ञानसामान्यविरोधितयानुभूयमानाज्ञानस्य तत्प्रागभावादिरूपत्वानुपपत्तेश्च । न च पराभिमत[2]ज्ञानसामान्याभावोऽपि त[3]दाश्रये तैरुपेयते योऽज्ञानानुभवगोचरः स्यात्, ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात्, "तरत्यविद्यां विततां" इत्यादिशास्त्राच्च, ज्ञाननिवर्त्याज्ञानस्य तदभावरूपत्वानुपपत्तेश्च । तस्माज्ज्ञानपदवाच्यसमस्तवृत्तिज्ञानाधिष्ठानतया तदनुगतं स्वप्रकाशात्मचैतन्यमेव ज्ञानसामान्यम् । तच्च तत्तदाकारवृत्तिज्ञानकृतावरणभङ्गेन तत्त-

---

१ विशेषज्ञानप्रागभावादिमतः पुरुषस्य । २ ज्ञानत्वावच्छिन्नाभावः । ३ ज्ञानसामान्याश्रये ।

द्विषयरूषिततयाभिव्यक्तं सत् तत्तदज्ञानं निवर्तयतीत्यनिर्वचनीयानादि-भावरूपमेवाज्ञानं न जानामीत्याद्यनुभवालम्बनम् । तदनुभवश्च साक्षि-चैतन्यमेव । नित्यनिरपेक्षसाक्षिभास्यत्वं विना तस्य स्वसत्तायामस्तित्वा-दिप्रकारकसंशयाद्यभावनियमानुपपत्तेः । पराक्रान्तं चात्राभियुक्तैरित्युप-रम्यते विस्तरभयात् ।

एवमहङ्कारस्य तद्धर्मस्य च वृत्तिज्ञानादेः केवलसाक्षिभास्यत्वमेव । न च तस्य मानसप्रत्यक्षत्वान्नैवमिति वाच्यम् । पराभिमतमनःसद्भावे मानाभावात् । "तीर्णो हि तदा सर्वाञ्शोकान्हृदयस्य भवति", "कामः सङ्कल्पो विचिकित्सा" इत्यादिश्रुत्या, "शोकहर्षभयक्रोधलोभमोहस्पृहा-दयः । अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥ मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः" इत्यादिस्मृत्या, इच्छादिकं क्वचिदाश्रितं गुणत्वादिति परिशेषानुमानेन च कामाद्याश्रयतया सिद्धस्य मनसस्तत्र प्रमाणत्वायोगाच्च ।

किंच, यस्य घटादिगोचरधारावाहिकप्रत्ययो वा दीर्घकालमिष्टदेवता-ध्यानं वा जातं तस्य तदनन्तरमेतावन्तं कालमहमिदमेवान्वभूवं नान्यदिति तावत्कालीनाहङ्कारधारादिप्रत्ययेतराज्ञानानां परामर्शो दृश्यते । न च तेषां तदानुभवाभावे उक्ता स्मृतिः संभवति, तस्या अनुभूतविषयत्वात् । ततश्च धारोत्तरकालं विनष्टानां प्रत्ययानां मनसानुभवितुमशक्यत्वात्, तदैव तत्तद्विषयानुव्यवसायकल्पने च धारादिविच्छेदापातात्, जिज्ञा-साघटितबाह्यज्ञानसामग्र्यां सत्यां मध्येऽनुव्यवसायासंभवाच्च अवश्यं धारादिप्रत्ययानां साकल्येन साधकनित्यानुभवरूपसाक्ष्येष्टव्यः ।

ननु एतावन्तं कालमिदमन्वभूवमिति नायं परामर्शो यदर्थमुक्तरूपः साक्ष्यपेक्ष्येत, किन्तु तत्कालानुभूतघटादिगोचरस्मृतिलिङ्गप्रसूता धारा-

दिप्रत्ययानुमितिरेवेयमिति चेत् । न । मध्ये तादृशस्मृतितः स्मृतित्वानुभवादिकल्पनाया योग्यानुपलब्धिपराहतत्वात्, स्मृतेरनुभवजन्यत्वाज्ञानसंशयादिमतोऽप्येतावन्तं कालमिदमेवान्वभूवमित्यनुसन्धानदर्शनाच्च न सानुमितिः । ततश्च परिशेषात् सा स्मृतिरेव ।

ननु गुरुमते धारादिप्रत्ययानां स्वप्रकाशत्वेन तदाश्रयतया तत्कालीनाहङ्कारस्यापि प्रतिभासात्तद्गोचरसंस्कारेभ्यो विनापि तदवभासिसाक्षिरूपानुभवमुक्तस्मृत्युपपत्तिरिति चेत् । न । तन्मतेऽपि तत्काले नान्यदज्ञासिषमितीतराज्ञानस्मृतेर्नित्यसाक्ष्यनुभवं विनानुपपत्तेः । न हि तैः स्वप्रकाशसंविद्बलाद्विषयान्तरमज्ञाततया भासत इत्युपेयते । नापि विषयीतराज्ञानं तदानुमानगम्यम् । तत्साधकलिङ्गानिरूपणात् । "अत्रायं पुरुषः स्वयंज्योतिः" इत्यादिश्रुतिसिद्धेन लाघवतर्कानुगृहीतैकात्मस्वप्रकाशत्वेनैवानित्यज्ञानादिव्यवहारसिद्धौ ज्ञानेच्छादिनानाजातीयानन्तव्यक्तिस्वप्रकाशत्वकल्पनाऽयोगेन तन्मतस्याप्रामाणिकत्वाच्च । न च नित्यानुभवरूपसाक्षिणः संस्कारानाधायकत्वात्तद्गोचरेष्वपि स्मृतिरनुपपन्नेति वाच्यम् । यद्वृत्त्युपहितसाक्षिणि यावन्तः (विषयाः) अवभासन्ते तद्वृत्तिनाशेनैव तावद्गोचरसंस्कारोत्पत्त्यभ्युपगमे बाधकाभावात् । घटाकारवृत्त्युपहितसाक्षिचैतन्ये च घटस्य तदाकारवृत्तेस्तदाश्रयाहङ्कारस्य तत्साक्षिणस्तदितराज्ञानस्य च दैवगत्या प्रतिभासात् तद्वृत्तिनाशजसंस्कारात् तावद्गोचरस्मृतेरुपपत्तेः ।

एवं स्वप्नमनोरथादिविषयाणामप्यपरोक्षसाक्षिणि माययाध्यस्तत्वात् तत्प्रसादादेवापरोक्षता । अन्यथा स्वप्नादौ स्मर्यमाणे स्मर्यमाणारोपरूपत्वे केवलस्मरणरूपत्वे वान्धादेः स्मर्यमाणे वस्तुनि स्मर्यमाणशुक्लाद्यारोपवत्पदार्थस्मृतिवच्च तदपरोक्षत्वासंभवात् ।

अत्र स्वप्रकाशकूटस्थचिन्मात्रं सत्त्वप्रधानाविद्याप्रतिबिम्बितं चिन्मात्ररूपेण तदनावृतं, तमःप्रधानया च तया निरतिशयानन्दादिरूपेणावृतमौदासीन्यबोधाभ्यां साक्षिशब्देनाभिलप्यते । स च साक्षी नानाजीववादेऽविद्यानानात्वात्प्रतिजीवं भिन्न एवासाङ्कर्येण तत्तदवस्थात्रयव्यवहारं निर्वहति । एकजीववादे तु तदुपाधेरविद्याया एकत्वात् एक एवोपाध्यन्तरानपेक्ष एव सर्वप्राणिषु सुषुप्तिसाधको भवति । जाग्रत्स्वप्नयोस्तु सुखदुःखाद्यनुभवानुसंधानव्यवहाराणां स्वप्नमनोरथाद्यनुभवानुसंधानव्यवहाराणां च प्रतिप्राणि व्यवस्थितत्वात् तत्तदन्तःकरणोपहित एव स तत्सर्वं व्यवस्थया निर्वहति । स एव चाविद्यायां प्रतिबिम्बरूप आसंसारविमोक्षात् स्थूलसूक्ष्मरूपेणानुवर्तमानतत्तदन्तःकरणसंपिण्डितरूपेण तद्धर्मान् प्रमातृत्वकर्तृत्वादीनविद्ययात्मनि मन्यमानो मिथ्यैव संसारित्वप्रथामुपगतः । तद्बिम्बरूपस्तु परमेश्वरोऽविद्यादिवशित्वात्सर्वात्मना तदनावृतस्वरूपः स्वाध्यस्तसर्वसाक्षितया नित्यमुक्त एवावतिष्ठते । ततश्चावस्थात्रयसाक्षिणः प्रत्यगात्मनो मतद्वयेऽपि वस्तुतोऽभिन्नकूटस्थचिन्मात्रतयाऽऽविद्यकभेदसंसारापवादेनासंसारिब्रह्मात्मता तत्त्वमादिवाक्यैः सुबोधेति सिद्धम् ।

चतुर्थेन तु जीवस्याहमिहैवास्मीत्यनुभवादुत्क्रान्तिगत्यागतिश्रवणाच्च परिच्छिन्नत्वशङ्कानिरासेनापरिच्छिन्नब्रह्मात्मता संभाव्यते । तथाहि—मयेदमवगतमिति हि समस्तदृश्यजातस्यात्मरूपावगति[1]व्याप्यत्वमनुभूयते, यथा प्रदीपेन प्रकाशितमिति प्रदीपात्मप्रकाशव्याप्यत्वम् । इतरथा जडानां स्वतः परतो वा प्रकाशासंभवेन जगदान्ध्यापातात् । जडज्ञानमात्रस्य विषयाज्ञातताविरोधित्वकल्पने च [2]प्रमाणव्यापारादेव

---

१ मदभिन्नावगतिविषयः । २ प्रमाणज्ञानस्याज्ञाननाशकत्वम् ।

तदुपपत्तेः तत्कल्पनानर्थक्याच्च । अतः स्वप्रकाशात्मप्रसादेन जडप्रथा वाच्या । तस्य च वस्तुतोऽसङ्गस्य तेन वास्तवसम्बन्धानिरूपणात् आध्यासिकतादात्म्यादेव घटः स्फुरतीत्याद्यनुभवसिद्धाज्जडापरोक्षमभ्युपेयमिति सर्वगतश्चिदात्मा । एवं च "तस्य भासा सर्वमिदं विभाति", "चिद्धीदं सर्वं काशते प्रकाशते चेति", "आकाशवत्सर्वगतश्च नित्यः", "नित्यः सर्वगतः स्थाणुः", "यथा प्रकाशयत्येकः कृत्स्नं लोकम्" इत्यादिश्रुतिस्मृतिवादा उपपन्ना भवेयुः । ततश्चाहमिहैवेत्यादिपरिच्छेदप्रतिभास उत्क्रान्त्यादिश्रुतिश्च बुद्ध्याद्युपाधिनिबन्धनमिथ्यापरिच्छेदादिविषया । तथा च "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः", "स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव" इत्याद्याः श्रुतयः, "अविभक्तं च भूतेषु विभक्तमिव च स्थितम्", "नृत्यतो गायतः पश्यन्यथैवानुकरोति तान् । एवं बुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते" इत्याद्याः स्मृतयश्चात्मनः परिच्छिन्नत्वादिकमुपाधिपरिकल्पितं दर्शयन्ति । ततश्च स्वतोऽपरिच्छिन्नचित्प्रकाशात्मनस्तादृशब्रह्मात्मत्वोपपत्तिरिति चतुर्विधान्वयव्यतिरेकपरिशीलनपरिभ्रष्टप्रत्यूहनिवहस्याधिकारिणस्तत्त्वमादिवाक्यात् प्रत्यग्ब्रह्मैक्यं सुबोधमिति स्थितम् ।

ननु अयःपिण्डादौ दग्धृत्वादिशक्तेरौपाधिकत्वेऽपि सत्यत्वं दृश्यते, वह्निमात्रसाध्यस्यापि दाहादेस्तदधीनत्वदर्शनात् । एवमात्मनि बुद्ध्याद्युपाधिकस्यापि कर्तृत्वादेः स्वर्गनरकादिप्रापकत्वात्सत्यत्वमेवेति न तस्य निर्विशेषब्रह्मात्मता संभवतीति चेत् । न । स्फटिकलौहित्यादेरौपाधिकस्य मिथ्यात्वदर्शनात् अयःपिण्डादावपि मिथ्यैव दग्धृत्वादि प्रतिभासते । वह्न्यादेरेव तच्छक्तिमत्त्वेन क्लृप्तत्वादयःपिण्डसंश्लेषाद्विशेषेणाभिव्यक्ता वह्निशक्तिरेव दाहविशेषहेतुतामपि वह्नेरेव घटयति । अतो नायःपिण्डे

तस्य सत्यत्वम् । स्फटिकलौहित्ये तु मिथ्यात्वं स्पष्टमेव, पूर्वरूपे स्थिते तत्र वास्तवलौहित्योदयायोगात् । तन्नाशस्य च हेत्वभावेनासंभवात् । अग्निसंयोगाद्वाश्रयनाशाद्वा पार्थिवरूपद्रव्यनाशो भवति । न चेह तदुभयमस्ति । नापि लौहित्योदये क्लृप्तं कारणमिहास्ति । न च जपाकुसुमाद्युपाधिरेव स्फटिके शौक्ल्यनाशे लौहित्योदये च कारणं कल्प्यत इति वाच्यम् । तत्र नाशादिबुद्ध्यभावात् । प्रतिभासाप्रतिभासाभ्यामेवोत्पत्तिनाशाभ्युपगमेऽतिप्रसङ्गात् । उक्तन्यायेन भ्रमस्थलेऽपि दोषवशाच्छुक्त्यादिनाशाद्रजताद्युत्पत्तिप्रसङ्गेन भ्रमोच्छेदापत्तेश्च ।

ननु स्फटिकग्रहणाय प्रवृत्ता नायनरश्मयस्तत्प्रतिहतास्तन्मात्रं गृहीत्वा तच्छौक्ल्यं ग्रहीतुमनीशाना जपाकुसुममुपसर्पन्ति । तत्रापि प्रतिघातदोषाद्रूपमात्रं गृहीत्वा स्फटिके तदारोपादविवेकाद्वा रक्तः स्फटिक इति व्यवहारं प्रवर्तयन्तीति न स्फटिके मिथ्यालौहित्यमुत्पद्यत इति चेत् । न । रूपग्रहं विना चक्षुषा द्रव्यग्रहस्य द्रव्यग्रहं विना रूपग्रहस्य चासंभवित्वात् । जपाकुसुमादेरपि स्फटिकादिवदेव स्वारसिकसंनिकर्षे संभवति प्रतिहतसंनिकर्षकल्पकाभावादुपाधिगतरूपस्यापि स्वाश्रयनिष्ठतयानुभूयमानस्यारोपाविवेकयोरसंभवाच्च । न च तत्रात्यन्तासदेव हि लौहित्यं भातीति वाच्यम् । तस्येन्द्रियसंप्रयोगसंवित्तादात्म्यायोगेनापरोक्षत्वासंभवात् । तस्मात्स्फटिकावच्छिन्नचैतन्यस्थाज्ञानावस्था स्फटिकमात्रानाच्छादिका मूलाविद्या वोपाध्युपरागसंजातक्षोभा तद्धर्मसजातीयस्फटिकादितादात्म्यापन्नमिथ्यालौहित्यादिभावेन विवर्तत इति स्फटिकाभिव्यक्तसंवित्तादात्म्याद्रक्तः स्फटिक इत्यपरोक्षप्रतिभासोऽनिच्छताप्यास्थेयः ।

एवमहङ्काराद्युपाधिनिमित्तं मिथ्यैव कर्तृत्वादिकमात्मनि भासते । तथाहि—"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भी-

रित्येतत्सर्वं मन एव", "विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च", "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्" इत्यादिश्रुतिभिः "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥", "मनः स्वलिङ्गं परिगृह्य कामान् जुषन्निबद्धो गुणसङ्गतोऽसौ" इत्यादिस्मृतिभिश्च स्वतःकर्तृत्वाद्याश्रयबुद्धितादात्म्याध्यासादेव चिदात्मनि मिथ्याकर्तृत्वादिप्रतिभास इति स्वतश्चिदात्मा कूटस्थ एव ।

यद्यपि कर्तृत्वादेर्ज्ञानादिप्रयोज्यस्य केवलजडधर्मत्वायोगाच्छबलधर्मत्वं, तथापि परिणाम्यन्तःकरणसमसत्ताकत्वात्तत्र तस्य स्वाभाविकत्वम् । चिदात्मनि तु कूटस्थतया कालत्रयेऽपि स्वतः सर्वविकारशून्ये कर्तृत्वादिधर्म्यन्तःकरणोपाध्युपरागादेव तद्वत्ताप्रतिभास इति स्फटिकलौहित्यादिवत्तत्र तदौपाधिकं मिथ्येति निश्चीयते । ततश्च स्वतोऽकर्त्रादिरूपस्य चिदात्मनोऽसंसारिब्रह्मात्मता सुलभेति सिद्धम् ।

नन्वेवमपि उपाधिदशायां स्फटिकलौहित्यस्य तत्त्वबोधान्निवृत्त्यदर्शनादकर्त्रात्मबोधादपि कर्तृत्वादिबन्धनिवृत्त्यनुपपत्तेस्तत्त्वबोधवैयर्थ्यमेवेति चेत् । न । स्फटिकादौ जपाकुसुमाद्युपाधेरध्यस्तत्वाभावेन तद्बोधात्तन्निवृत्त्ययोगात्तदधीनलौहित्यभ्रमानिवृत्तावप्यन्तःकरणस्य चिदात्मन्यध्यस्ततया तत्तत्त्वबोधात्तन्निवृत्तिरात्यन्तिकीति तदधीनानर्थव्रातस्यात्यन्तनिरासेनानतिशयानन्दब्रह्मताभिव्यक्तेस्तत्त्वबोधात्परमपुरुषार्थलाभात् । तत्रान्तःकरणस्याध्यस्तत्वे लौहित्यादेरिवाध्यस्तसजातीयवास्तवोपाध्यन्तरापेक्षा स्यात्, तदभावान्न तदध्यस्तमिति शङ्कानिरासाय निरुपाधिरज्जुसर्पाद्यध्यासमुदाहरन्ति । तत्र रज्ज्वादौ संनिहितस्य पारमार्थिकस्य सर्पादेरभावात् तदुपाधिकारोपायोगात् संस्कारोपनीतोपाधेरहङ्काराध्यासेऽपि

१ अतस्मिंस्तद्बुद्धिरध्यासः । २ निर्विकार एव ।

सुलभत्वात्, अत्यन्तासतश्च पूर्वोक्तविषयापरोक्षत्वायोगात्, परमार्थत्वे च बाधानुपपत्तेः, सदसदात्मत्वस्य चैकत्र विरोधादेवासंभवात्, मिथ्यैव सर्पोऽभादित्याद्यनुभवाच्च सदसदादिना दुर्निरूपतयाऽनिर्वचनीयो मिथ्याभूतः सर्पाद्यध्यासोऽभ्युपेयः।

ननु सर्वप्रत्ययानां यथार्थत्वात् भ्रान्तिरेवासती कथमनिर्वचनीयमर्थं साधयेत्। तथाहि—ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात् प्रमात्ववत्। न च स्मृतित्वे व्यभिचारः, स्मृतीनामज्ञातज्ञापकत्वाभावेन प्रमात्वाभावेऽपि यथार्थत्वानपायात्। विपक्षे च यथार्थज्ञानादेव सर्वव्यवहारोपपत्तावयथार्थज्ञानकल्पनागौरवात्। न चायथार्थज्ञानाभावे रजतार्थिनः शुक्तौ प्रवृत्त्यनुपपत्तिरिति वाच्यम्। इष्टविषयरजतादिज्ञानस्यैव स्वविषयादगृहीतभेदे देशविशेषनिष्ठतयोपस्थिते शुक्तीदमंशादौ प्रवर्तकत्वात्। तत्र च भेदाग्रहस्य प्रतिबन्धकाभावतयैवोपयोगात् प्रवर्तकज्ञाने न गौरवशङ्कावकाशः। एवमनिष्टविषयरङ्गादिज्ञानस्याप्यसति भेदग्रहे रजतादेरिदमाकारेण गृह्यमाणान्निवर्तकत्वसुपपद्यते। न चैवमिमे रङ्गरजते इति विपरीतसमूहालम्बनदशायामुभयोरप्युपस्थितेष्टानिष्टरजतरङ्गरङ्गरजतयोः प्रवृत्तिनिवृत्तिवत् रजतरङ्गयोरपि ते स्यातामिति दुरवस्थापत्तिरिति वाच्यम्। यथार्थप्रवृत्तिलक्षणकार्यविशेषे प्रवृत्त्यादिसमानविषयेष्टानिष्टविशिष्टज्ञानस्यापि विशेषकारणत्वेन तदभावादेव रजतरङ्गयोर्यथार्थप्रवृत्त्याद्ययोगात्। अयथार्थव्यवहारस्तु दोषवशात् गृह्यमाणादविवेके सतीष्टानिष्टज्ञानमात्रादेव भवतीत्यख्यातिवादिनो[1] मन्यन्ते।

तदयुक्तम्। ज्ञानत्वं अयथार्थवृत्ति ज्ञानमात्रवृत्तित्वात् सत्तादिवदिति प्रतिप्रयोगसंभवात्। लाघवादिष्टादिज्ञानस्य स्वविषये प्रवृत्त्यादिहेतुत्वे

---

१ प्राभाकराः।

संभवति तदविवेकेनोपस्थिततत्कल्पनायोगेनायथार्थज्ञानस्यावश्यकत्वात् । अख्यातिमते शुक्तीदमंशरजतयोर्गृह्यमाणस्मर्यमाणयोः स्वरूपमात्रत्वात् तद्भेदस्य तद्ग्रहानुपपत्तेश्च । सर्वप्रत्यययाथार्थ्ये लोकसिद्धभ्रान्तिबाधव्यवस्थानुपपत्तेश्च । न चायथार्थव्यवहारहेतुत्वतन्निवर्तकत्वाभ्यां भ्रान्तिबाधव्यवस्थेति वाच्यम् । भ्रान्तिबाधयोस्तद्धेतुत्वतन्निवर्तकत्वनियमाभावात् । वीतरागादिपुरुषगतभ्रान्तिबाधयोस्तददर्शनात् । तद्योग्यतायाश्च ज्ञानेऽयथार्थत्वादिग्रहं विना दुर्ग्रहत्वात् । यथार्थज्ञानमात्रस्य दोषजन्यत्वायोगाच्च । यथार्थज्ञानादेवायथार्थव्यवहारोदये सर्वत्रानाश्वासप्रसङ्गश्च ।

किंच पदात्पदार्थस्मृतिवत् रजतादिज्ञानस्य प्रमुष्टतत्ताकस्मृतित्वे स्फुटतरापरोक्षत्वानुभवो विरुध्येत । न चापरोक्षेदमंशतद्ग्रहाविवेकाद्रजतज्ञानयोरपरोक्षव्यवहारमात्रं न तु तदनुभवोऽस्तीति वाच्यम् । समीचीनरजतादाविव सार्वजनीनानुभवमपलपतः प्रामाणिकैर्बहिष्कार्यत्वात् । परोक्षरजताद्यविवेकादिदमंशादावपि परोक्षत्वव्यवहारापाताच्च । स्वप्नभ्रमस्य चाख्यातिमते स्मरणमात्राविवेकत्वेन कथमप्यपरोक्षप्रथानुपपत्तेः । ततश्च विवादपदं रजतज्ञानं पुरोवर्तिवस्तुविषयं इच्छाद्वारा तत्र प्रवर्तकत्वात् समीचीनरजतानुभववदित्यपरोक्षभ्रमसिद्धौ तद्विषयानिर्वचनीयवस्तुसिद्धिरिति ।

ननु भ्रमविषयस्य सर्पादेरिदमात्मना प्रतीतस्य नायं सर्प इत्यादिबाधविरोधेन तत्र सत्त्वाभावेऽपि देशान्तरादौ सत्त्वोपपत्तेर्नानिर्वचनीयत्वमभ्युपेयम् । न च तस्य देशान्तरादौ सत्त्वे मानाभावः, भ्रमस्य संस्कारजन्यत्वेन संस्कारमूलानुभवसमानविषयत्वस्य स्मृतिवत् आवश्यकत्वात् । अनिर्वचनीयस्य च प्रातिभासिकतया तन्मूलानुभवविषयत्वा-

---

1 विफलप्रवृत्तिहेतुत्व ।

योगात्। "लब्धरूपे[1] क्वचित्किंचित्तादृगेव[2] निषिध्यते" इति न्यायेन प्रतिषेधात्मनो बाधस्यापि परमार्थप्रतियोगिकाभावविषयत्वेन भ्रमप्रतिपन्नस्य बाध्यस्य च सर्पादेर्देशान्तरादौ सत्त्वसिद्धेः। इन्द्रियासंनिकृष्टस्यापि तस्य दोषवशादपरोक्षत्वोपपत्तेः। दोषस्य संस्कारस्य ज्ञानस्य वा तत्रेन्द्रियप्रत्यासत्तित्वसंभवाच्च तदपरोक्षत्वोपपत्तिः। न चैवमन्याकारज्ञानस्यान्यालम्बनत्वेऽनुभवविरोधः सर्वत्रानाश्वासप्रसङ्गश्चेति वाच्यम्। शुक्त्यादिविशेषांशस्य रजताद्याकारज्ञानालम्बनत्वानङ्गीकारात्। तत्सामान्यांशस्य तु तदालम्बनत्वमनुभवसिद्धमेव पुरोवर्त्यङ्गुल्या निर्दिश्येदंरजतत्वेनानुभूयत इत्यभिवदनादिदर्शनात्, उत्सर्गतोऽयाथार्थ्यनिश्चयेन सर्वत्रानाश्वासायोगाच्च। न चैवमपि इदंरजतयोः प्रतीयमानतादात्म्यादिवैशिष्ट्यस्यासत्त्वात् तदंशे भ्रमस्यासद्विषयत्वापाताद्रजतांशेऽपि तथात्वं स्यादिति वाच्यम्। भ्रमे प्रतीयमानवैशिष्ट्यस्य पुरोवर्तिनि सत्त्वाभावेऽपि देशान्तरीयरजतादौ सत्त्वात्तदंशेऽप्यसद्भानाभावात्। तस्माद्भ्रमविषयस्य संसर्गस्य तत्प्रतियोगिनश्चान्यत्र सत्त्वात् तस्य स्वरूपतो विषयतश्च नानिर्वचनीयतेति।

अत्रोच्यते। विवादपदं रजतज्ञानं पुरोवर्तिरजतविषयं रजतार्थिनो नियमेन पुरोदेशस्थे प्रवर्तकत्वात् समीचीनरजतज्ञानवत्, विप्रतिपन्नः शुक्तीदमंशो रजतसंभिन्नः[3] अव्यवधानेन रजतेच्छाधीनप्रवृत्तिगोचरत्वात् पुरोवर्तिरजतेदमंशवत्, इदं रजतमिति भ्रमविषयो रजतं पुरोदेशवर्ति पुरोवर्तिन्येव प्रवर्तकज्ञानकारणत्वात् पुरोवर्तिरजतवदेवेत्याद्यनुमानैरिदंरजतमित्याद्यनुभवानुगृहीतैर्भ्रमविषयस्य पुरोवर्तित्वसिद्धेर्देशान्तरादौ तत्सत्त्वं तावदनुपपन्नम्। न च बाधविरोधः, तद्योग्यस्यैव[4] तस्य पुरोदेशे स्वीकारात्। बाधो हि नाम मिथ्यात्वनिश्चयो वा तत्त्वज्ञानाधीनात्यन्तिकनिवृत्तिर्वा,

---

१ ज्ञातस्वरूपेऽधिकरणे। २ ज्ञातस्वरूपमेव। ३ संबद्धः। ४ बाधयोग्यस्यैव।

न तु व्यधिकरणप्रकारकत्वादिनिश्चयो बाधः। घटे रूपं, आकाशे शब्दः, चित्रगुर्देवदत्त इत्यादिज्ञानानामपि बाध्यत्वप्रसङ्गात्। तस्मादस्मदुक्त एव बाधः। स च पुरोदेश एवानिर्वचनीयभ्रमविषयाङ्गीकार उपपद्यते, न तु देशान्तरादौ सति रजतादौ। तत्रैकावच्छेदेन स्वसंसृज्यमानस्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्य स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वस्य वा मिथ्यात्वस्य ज्ञानाधीनात्यन्तिकनिवृत्तेर्वा संभवात्।

यत्तु भ्रमस्य संस्कारजन्यत्वेन तन्मूलानुभवसमानविषयत्वात् देशान्तरादौ पूर्वानुभूतमेव तद्विषयो नापूर्वमनिर्वचनीयमिति। तत्तुच्छम्, परमते गृह्यमाणारोप[1]स्य संस्कारजन्यत्वाभावात्। स्मर्यमाणारोपस्यापि पराभिमतस्य स्मृतिजन्यतया तदजन्यत्वात्। स्मृतेश्च शब्दलिङ्गादिस्मृतिवत् भिन्नविषयज्ञानेऽपि हेतुत्वोपपत्तेर्न परमते पूर्वानुभूतविषयत्वं भ्रमस्य शक्यं नियन्तुम्। अस्मन्मते तु संस्कारस्यानुभूतसजातीयभ्रमविषयोत्पत्तिहेतुत्वस्य वक्ष्यमाणत्वात्। तद[2]जन्यत्वेन भ्रमस्य न देशान्तरादिगतविषयत्वम्। बाधोऽपि बाध्यस्याधिष्ठानेऽनिर्वचनीयप्रसक्तिमात्रमपेक्षते, न देशान्तरादिसत्त्वमपि, केव[3]लव्यतिरेकाभावात्। इतरथान्यत्रप्रमितप्रतियोगिकप्रतिषेधस्य बाधत्वे सर्वस्यापि प्रसज्यप्रतिषेधस्य बाधत्वप्रसङ्गात्।

किंच भ्रमविषयस्य देशान्तरादौ सत्त्वे तस्येन्द्रियसंनिकर्षाभावात् अनुभूयमानं प्रत्यक्षत्वं न स्यात्। न चासंनिकृष्टस्यापि दोषात्तदुपपत्तिरिति वाच्यम्। अन्यत्र क्लृप्तकारणं विनापि दोषादेव चाक्षुषबोधाभ्युपगमे तस्मादेव विनापि विशिष्टबोधं विशिष्टव्यवहारसंभवात् भ्रमे मानाभावादविवेकवादिना जितं स्यात्। लौकिकसंनिकर्षाभावेऽप्यलौकिकस्य तस्य भावादपरोक्षत्वाद्युपपत्तिरिति चेत्। न। तत्र न तावद्दोष-

---

१ आरोपो भ्रमः। २ संस्काराजन्यत्वेन। ३ अन्यत्र सत्त्वाभावे बाधाभाव इत्यस्याभावात्।

स्येन्द्रियप्रत्यासत्तित्वम् । तस्य कुत्राप्यक्लृप्तत्वात् । दोषस्य तेन रूपेण भ्रमहेतुत्वे च भ्रमस्य प्रमाप्रमासाधारणकारणमात्रजन्यत्वेनाप्रामाण्यपरतस्त्वभङ्गप्रसङ्गात् । दोषान्वयव्यतिरेकयोरन्यथासिद्धत्वेन तस्यादोषत्वेनापि तद्धेतुत्वकल्पकाभावात् । नापि संस्कारो ज्ञानं वा तत्र प्रत्यासत्तिः । तयोः प्रत्यासत्तित्वेऽपि यत्र विशेष्ये यद्वैशिष्ट्यं विशिष्यानुभूतं यथा देवदत्ते दण्डकुण्डलादिवैशिष्ट्यं तत्रैव कालान्तरे दण्ड्ययमित्यादितद्विशिष्टप्रत्यक्षे तयोः प्रत्यासत्तित्वात् । इतरथाऽननुभूतदण्डादिसंसर्गेऽपि देवदत्ते संनिकृष्टे दण्डादिस्मरणे च सति दण्ड्ययमित्यादिप्रत्यक्षप्रसङ्गात् । पर्वतादौ च संनिकृष्टे परमते विशेषणवह्न्यादिज्ञानसत्त्वात् तद्विशिष्टप्रत्यक्षापातेन प्रत्यक्षधर्मिकानुमानमात्रोच्छेदप्रसङ्गाच्च । न च तत्रानुमितिसामग्री बलवतीति वाच्यम्, विशेषदर्शनाधीनसंशयोत्तरप्रत्यक्षाभावप्रसङ्गात् । न च तत्र लौकिकसामग्री बलवतीति वाच्यम् । संशयोत्तरप्रत्यक्षभ्रमानुदयप्रसङ्गात् । ततश्च शुक्तीदमंशादौ रजतादेः पूर्वं विशिष्यानुभवात् तत्संस्कारादेस्तद्विशिष्टप्रत्यक्षे न प्रत्यासत्तितेति तदपरोक्षत्वानुपपत्तिः । सुरभि चन्दनमित्यादिज्ञाने सौरभ्याद्यंशे साक्षात्करोमीत्यनुभवाभावेन तदंशे संस्कारमात्रजन्यत्वेन तज्ज्ञानस्य परोक्षत्वोपपत्तेरेकत्र प्रमात्वाप्रमात्वयोरिव परोक्षत्वापरोक्षत्वयोरविरोधात्, क्वापि संस्कारादेः प्रत्यासत्तित्वे मानाभावाच्च ।

किंच सर्वत्र विशिष्टज्ञानं यदंशे यदाकारं तदंशे तद्विषयमेव दृष्टम् । भ्रमे तु सामान्यांशज्ञानस्य रजतादिविशेषांशज्ञानस्य चेदमंशमात्रालम्बनत्वेऽनुभवविरोधः स्यात् । केषांचिज्ज्ञानानां स्वाकारवस्तुव्यभिचारेऽभ्युपगतावौत्सर्गिकयाथार्थ्यनिश्चयस्यैव प्रामाण्यपरतस्त्ववादेऽसंभवात् सर्वत्रानाश्वासो वा केन वारणीयः ।

किंच शुक्तीदमंशरजतयोस्तादात्म्यादिरूपसंसर्गस्य भ्रमविषयस्यान्यत्रापि सत्त्वासंभवादनिर्वचनीयस्य तस्यानुपगमात्तदंशेऽसत्ख्यातिर्दुर्वारा स्यात् । रजतादिवदेव तत्संसर्गस्यापि भ्रमविषयस्यान्यत्रापि सत्त्वान्नोक्तदोष इति चेत् । एवं तर्हीदमंशे रजताद्यंशे तत्संसर्गांशे च विशिष्टज्ञानस्य यथार्थत्वेन प्रमात्वापातात् भ्रमत्वं न क्वाप्यवकाशमासादयेदिति स्वयमेवासत्स्यात् ।

अपि च, यद्वैशिष्ट्यज्ञानाद्रजतार्थी नियमेन शुक्तीदमंशे प्रवर्तते, न तद्वैशिष्ट्यं भ्रमगम्यं केनापि तार्किकेणान्यत्र वा तत्र वासदिति शक्यं वक्तुमिति तदंशे कथं नासत्ख्यातिप्रसङ्गः । तत्र चासदवभासोपगमे रजताद्यंशेऽप्यसदवभासोपपत्तेर्जितं माध्यमिकेनेति क्वान्यथाख्यातिः । किंच नभोनीलिमचन्द्रप्रादेशिकत्वकेशोण्डूकवंशोरगादिभ्रमेषु गृह्यमाणस्य स्मर्यमाणस्य वान्यत्र सतः प्रतिभासकल्पनायोगादनिर्वचनीयविषयत्वमावश्यकमिति सर्वत्र भ्रमविषयोऽनिर्वचनीय इति सिद्धम् ।

नन्विदं रजतमिति बहिष्ट्वेन प्रतीतरजतस्य नेदं रजतमितीदन्तामात्रबाधनात् अनिदंचिदात्मरूपेण सत्त्वोपपत्तेर्नानिर्वचनीयत्वकल्पनोपपद्यते । प्रयोगश्च, शुक्तिकासंप्रयोगे भासमानं रजतं संविदभिन्नं, संप्रयोगमन्तरेणापरोक्षत्वात् संवेदनवत् । विपक्षे तु स्वप्रकाशसंविदात्मत्वाभावात् संप्रयोगाभावाच्च तदपरोक्षानुपपत्तिर्बाधिका । न च मनआदौ व्यभिचारः, समनन्तरप्रत्ययस्यैव मनस्त्वात्, कामादीनामपि स्वप्रकाशसंविदात्मत्वात् । न च संविद्विषयस्य रजतादेर्वस्तुतस्तदभेदोऽनुपपन्न इति वाच्यम् । स्वविषयत्वस्य स्वप्रकाशपदाभिलप्यत्वेन विषयविषयिणोरभेदाविरोधात् । तस्मादात्मरूपेण सदेव रजतादिभ्रमविषयो नानिर्वचनीय इति चेत् । न । शुक्तिकैवेयं न रजतं, मिथ्यैव रजतमभादित्य-

नुभवेन रजतस्यैवेदमंशेऽध्यस्तत्वात् । इदन्त्वस्य तु बाधावधिधर्मतया बाधकप्रत्ययेऽपि प्रत्यभिज्ञायमानस्य वास्तवत्वेनाबाध्यमानत्वात् कुतो रजतस्य तन्मात्रबाधेनानिदंचिदात्मत्वम् । न च शुक्त्यादेरपि ज्ञानात्मत्वात् तत्रापीदन्त्वमारोपितं बाध्यमेवेति वाच्यम् । तथा सति तस्य क्वापि सत्त्वाभावात् निरुपाख्यतयाऽपरोक्षत्वं न स्यात्, त्वदुक्तहेतोस्तत्र व्यभिचारापातश्च ।

तर्हीदंरजतयोस्तादात्म्यमात्रमारोपितमस्तु, न पुना रजतमपीति चेत् । तर्हि बाधकज्ञानेन तयोर्भेदमात्रं सिद्ध्येन्न तु रजतादेः संविदात्मत्वं तदभावेऽपि शुक्तीदमंशाद्भेदसंभवात् । भ्रान्तावपरोक्षतया भासमानयोरिदंरजतयोस्तादात्म्यमात्रस्यारोपे बाधे चाभ्युपगम्यमाने दूरस्थवनस्पत्योरिव बाधानन्तरमपि तयोर्विविक्ततयाऽपरोक्षत्वापाताच्च । किंच, तत्तादात्म्यस्यापि सत्त्वे बाधायोगादसत्त्वे च सत्यसंविदभेदाभावेनापरोक्षत्वासंभवादनिर्वचनीयस्य चानभ्युपगमात्, अभ्युपगमे वा रजतादेरपि तथैवापरोक्षतापत्तेरयुक्तं तस्यात्मरूपत्वमभ्युपगन्तुम् ।

यत्तु संप्रयोगमन्तरेणापरोक्षत्वादित्यनुमानं, तदिदं रजतसंसर्गांशे दुःखादौ च व्यभिचारादयुक्तम् ।

यदपि कामादीनामपि स्वप्रकाशत्वमिति तदप्ययुक्तम् । स्वरूपेण भेदप्रतिपत्तिशून्यस्य संवेदनस्यानुभवाकारानुगतप्रत्ययेनैकत्वे सति तस्यैव लाघवेन स्वप्रकाशत्वकल्पनेन तत्संबन्धादेवेच्छादीनां प्रतिभासोपपत्तौ गौरवेण नानाजातीयानामनन्तानां तेषां स्वप्रकाशत्वकल्पनाऽयोगात्, भ्रमविषयस्य संविद्रूपेणान्तःसत्त्वे गुञ्जापुञ्जादौ वह्न्याद्यारोपदशायां शरीरादिदाहप्रसङ्गाच्च । न च तस्यार्थक्रियासामर्थ्याभावान्नायं प्रसङ्ग इति वाच्यम् । अर्थक्रियासामर्थ्यस्यैव तव मते सत्त्वरूपत्वेन तदभावे तस्यासत्त्वप्रसङ्गात् ।

किंच, रजततत्संवेदनयोः प्रकाश्यप्रकाशभावेन भेदानुभवबाधितं तदनुमानम् । न च सोऽनुभवो भ्रमः, बाधकाभावात् । न चेदमेवानुमानं बाधकं, परस्पराश्रयापातात् ।

यत्तु स्वविषयत्वं स्वप्रकाशत्वमित्यङ्गीकारादभेदेऽपि प्रकाश्यप्रकाशभावोपपत्तिरिति, तत्तुच्छम् । प्रदीपादौ नियमेन तद्भेददर्शनेनैकत्र विषयिविषयभावानुपपत्तेस्तल्लक्षणस्यासंभवित्वात्, क्रियाकर्मभावस्य गुणप्रधानभूतस्यैकदैकत्रायोगात्, विषयविषयिभावस्य स्वतोऽविरुद्धत्वेऽर्थात्मना विषयत्वं संविदात्मना तु विषयित्वमित्याकारभेदकल्पनानुपपत्तेश्च । न चैवं स्वप्रकाशत्वानिरुक्तिः । अवेद्यत्वे सति स्वसत्तायां स्वसत्ताप्रकारकसंशयादिविरोधिस्वरूपत्वस्यैव स्वप्रकाशपदाभिलप्यत्वात् । तस्मादभेदे विषयविषयिभावासंभवादबाधितभेदानुभवात् भ्रमविषयस्य स्वसंविद्भेदसिद्धेरात्मख्यात्यभ्युपगमो निर्मूल इति सिद्धम् ।

ननु भ्रान्तिप्रतिपन्नविशेषस्य कुत्रापि सत्त्वाभावेऽत्यन्तासत्त्वमेव युक्तं, नानिर्वचनीयत्वम् । न चासतो निरस्तसमस्तसामर्थ्यस्य संप्रयोगाद्ययोगादपरोक्षत्वानुपपत्तिरिति वाच्यम् । तस्य सर्वसामर्थ्यविरहेऽपि दोषसध्रीचीनसामग्र्याऽसत्प्रकाशनशक्तिमत्त्वेन तद्विषयापरोक्षभ्रमोपपत्तेः । न च तस्यासत्त्वे मानाभावः । भ्रान्तिप्रतिपन्नस्य नेदं रजतमित्याद्यनुभवेनात्यन्तिकासत्त्वसिद्धेः । ननु भ्रान्तिविषयस्य कालभेदेन सत्त्वासत्त्वोपपत्तेस्तद्विषयौ भ्रान्तिबाधाविति चेन्न । तथात्वे याथार्थ्योत्तयोर्भ्रमत्वादेरयोगात्, बाधकज्ञानेन तस्य तदाऽसत्त्वानुभवेन भ्रमकाले सत्त्वासंभवाच्च । एतेन—सदैव सदसदात्मकं वस्तु, तस्य कदाचित्किंचिद्रूपमनुभूयते इत्यनैकान्तिकवादिनो मतं—अपास्तम् । तथात्वे सर्वेषां प्रत्ययानां यथार्थत्वेन भ्रान्तिबाधव्यवस्थाया दत्तजलाञ्जलिता स्यात्,

सत्त्वासत्त्वयोर्विरुद्धरूपतया युगपदेकत्रासंभवाच्च । तस्मादसत्येव सदवभासो भ्रम इति चेत् ।

न । असतः प्रकाशेन संबन्धासंभवेन तत्प्रकाशासंभवात् । दोषादावसत्प्रकाशनशक्तेर्निर्विषयाया असंभवात्तदधीनापरोक्षभ्रमानुपपत्तेः । न ह्यसतो वन्ध्यापुत्रस्य संबन्धि किञ्चिद्वस्तु तज्जननशक्तिर्वा कुत्रचिद्दृष्टा ।

किञ्च, ज्ञाने न तावदपरोक्षत्वं जातिः, तद्व्यञ्जकानिरूपणात्, प्रत्यभिज्ञायां तत्तांशे साक्षात्करोमीत्यनुभवाभावेनैकत्रापि परोक्षत्वापरोक्षत्वयोः प्रमात्वाप्रमात्ववदव्याप्यवृत्तित्वसंभवेन तयोर्जातित्वानुपपत्तेश्च । नापि इन्द्रियत्वेनेन्द्रियजन्यत्वाद्युपाधिः साक्षात्त्वम् । तस्य तज्जन्यज्ञानेष्वनुगतावच्छेदकं विना दुर्ग्रहत्वात्, इन्द्रियत्वस्यापि जातिरूपस्योपाधिरूपस्य वा दुर्निरूपत्वादिति वक्ष्यमाणत्वात्, मनोधर्मेच्छादिसाक्षात्कारे तदयोगाच्च । तस्मादपरोक्षार्थविषयत्वमेव ज्ञानस्यापरोक्षत्वं वक्तव्यम् । अर्थस्य चापरोक्षत्वमनावृतप्रमातृचैतन्यतादात्म्यमेवेति नासतस्तद्ज्ञानस्य चापरोक्षत्वसंभवः ।

यत्तु नेदं रजतमित्याद्यनुभवेनारोपितासत्त्वसिद्धिरिति, तन्न । तस्य तत्र त्रैकालिकनिषेधप्रतियोगित्वमात्रगोचरत्वात्, अन्यत्र सतोऽनिर्वचनीयस्य वा तदुपपत्तेः, असतो धर्मधर्मिभावशून्यस्य तदसंभवाच्च ।

ननु सर्वदेशीयसर्वकालीनात्यन्ताभावप्रतियोगित्वमेवासत्त्वं, तदेव बाधगोचर इति चेत् । मैवम् । सद्वादिभिर्विभुद्रव्यस्य सत एव तदभ्युपगमात्[1] । मायावादिभिराविद्यकस्यापि तदङ्गीकारात् ।

किञ्च, तादृशाभावस्य[2] सत्त्वे तत्प्रतियोगिनोऽपि सत्त्वापातः । इतरथा वन्ध्यापुत्रापत्यवन्निरूपकस्यासत्त्वेन[3] निरूप्याभावस्यापि सत्त्वायो-

---

१ सर्वदेशीयसर्वकालीनात्यन्ताभावाङ्गीकारात् । २ सर्वदेशीयसर्वकालीनाभावस्य । ३ प्रतियोगिनः ।

गात्, त[1]स्यासत्त्वे च तदभावे सर्वदेशीयत्वादेरावश्यकत्वेन स्वस्मिन्नपि त[2]दयोगेन प्रतियोगिनोऽसत्त्वानुपपत्तेः, एवं तस्य सस्यासत्त्वे तादृशाभावन्तरापातेनानवस्थापाताच्च।

अपिच, सर्वदेशकालादेरसर्वज्ञेन ज्ञातुमशक्यत्वात्, अभावे त[3]दीयत्वस्यापि त[4]थात्वात्, तत्प्रयोगित्वरूपासत्त्वमपि दुर्ज्ञानमिति भ्रम[5]विषयस्यासत्त्वमपि मानहीनमिति सिद्धं तस्यानिर्वचनीयत्वम्।

नन्वनिर्वचनीयत्वमपि दुर्निरूपं, इदं रजतमित्यादिरूपेण निरुच्यमानत्वात्। सदसद्वैलक्षण्यमेव तदिति चेत्, न, एकैकवैलक्षण्यस्यैकैकत्रातिव्याप्तेः, समुदितरूपस्यासंभवेन तद्वैलक्षण्यस्याप्यसंभवात्। संभवे वा प्रातिस्विकरूपेणोभयत्रातिव्याप्तेः। अत एव प्रत्येकविलक्षणत्वे सति समुदितविलक्षणत्वं तदिति निरस्तम्। समुदितवैलक्षण्यस्य प्रतियोगिशून्यस्यासंभवात्। असतोऽपि प्रतियोगित्वासंभवेन तद्वैलक्षण्यस्याप्यसंभवात्। नापि बाध्यत्वं तदिति वाच्यम्। अनिर्वचनीयत्वस्य बाध्यत्वं प्रति प्रयोजकत्वाभ्युपगमेन तयोरभेदायोगात्।

बाध्यत्वमपि किं बाधकज्ञाननिवर्त्यत्वं, त[6]द्विषयत्वं वा, तदधीनात्यन्तिकनिवृत्तिमत्त्वं वा, प्र[7]तिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा, मिथ्यात्वेन निश्चितत्वं वा। नाद्यः, सतोऽपि पूर्वज्ञानादेः प[8]रैरपि तन्निवृत्तित्वोपगमात्। अज्ञानस्यैव सिद्धान्ते ज्ञाननिवर्त्यत्वेन शुक्तिरजतादेस्तन्निवर्त्य[9]त्वाभावाच्च। नापि द्वितीयः, शुक्त्यादौ ब्रह्मणि चातिव्याप्तेः। अधिष्ठानतत्त्वज्ञानस्यैव बाधकत्वाङ्गीकारेणारोपिते तदभावाच्च। नापि तृतीयः, रज्ज्वादौ सर्पादिभ्रमस्य सकृद्बाधितस्य पुनरपि तत्रैव कालान्तरे

१ तादृशाभावस्य। २ सर्वकालीनसर्वदेशीयत्वायोगेन। ३ देशीयकालीयत्वस्यापि। ४ ज्ञातुमशक्यत्वात्। ५ रजतादेः। ६ बाधकज्ञानविषयत्वम्। ७ निश्चिताश्रये। ८ नैयायिकैः। ९ उत्तरज्ञाननिवर्त्यत्वाङ्गीकारात्।

समुद्भवात् तस्य तत्त्वबोधाधीनात्यन्तिकनिवृत्तिमत्त्वाभावेनाव्याप्तेः । न चोपादानेन सह आरोपितस्य निवृत्तिरात्यन्तिकी निवृत्तिः, सा च सकृद्बाधितस्याप्यस्त्येव, भ्रमान्तरं त्वज्ञानान्तरोपादानकमिति वाच्यम् । भावरूपाज्ञानस्योपादानाभावेन तेन[1] सह निवृत्त्ययोगादबाध्यत्वापातात् । नापि चतुर्थः । प्रसज्यप्रतिषेध्यस्य सर्वस्य बाध्यत्वप्रसङ्गात्, अनिर्वचनीयस्यापि स्वसत्ताकाले स्वाभावसामानाधिकरण्यस्य विरुद्धत्वेन स्वोपाधौ त्रैकालिकनिषेधप्रतियोगिकत्वस्यासंभवाच्च । न च समानसत्ताकयोरेव भावाभावयोरेकदैकत्र विरोधात् अध्यस्ततदभावयोश्च विषमसत्ताकत्वान्नोक्तविरोध इति वाच्यम् । लाघवेनोक्तविरोधस्य भावाभावत्वमात्रप्रयुक्तत्वात्, प्रतियोगिविरहात्मनोऽभावस्य तन्निरूप्यस्य तद्विषमसत्ताकत्वायोगाच्च । नापि पञ्चमः । उक्तरूपान्यतमस्य मिथ्यात्वरूपत्वे दत्तोत्तरत्वात्, अन्यस्य च तस्यानिरूपणात्, स्वरूपेण सत्यस्यापि विशेष्यासंसर्गिप्रकारकज्ञानगोचरत्वस्यैव मिथ्यात्वनिश्चयत्वाच्च ।

नापि भ्रमविषयस्यानिर्वचनीयत्वे प्रमाणमस्ति । तत्र न तावत्प्रत्यक्षं प्रमाणम् । ख्यातिबाधयोस्तत्सत्त्वासत्त्वमात्रगोचरत्वात् ।

ननु विमतमनिर्वचनीयं बाध्यत्वात् व्यतिरेकेणात्मवदित्यनुमानं मानमिति चेत् । न । साध्यस्याप्रसिद्धत्वेन व्यतिरेकव्याप्त्यनिश्चयात् बाध्यत्वस्यापि पूर्वोक्तप्रकारेणानिरूपणाच्च । जडत्वदृश्यत्वादीनां सत्त्वेऽप्युपपत्तेरप्रयोजकत्वाच्च ।

ननु ख्यातत्वे सति बाध्यत्वानुपपत्तिस्तस्यानिर्वचनीयत्वे प्रमाणम् । तस्यासत्त्वे नरशृङ्गवदपरोक्षख्यात्ययोगात्, सत्त्वे चात्मवद्बाधायोगात्, सदसदात्मकत्वस्य चैकत्र विरोधादेवासंभवात्, तदुभयोपपत्तये तद्विष-

---

१ उपादाबेन ।

यस्य सदसद्विलक्षणत्वमेव कल्पनीयमिति चेत् । मैवम् । तत्कल्पनेऽपि तदुभयानुपपत्तेस्तदवस्थत्वात् । तथाहि—सद्विलक्षणत्वे नरशृङ्गवत्ख्यात्ययोगात्, असद्विलक्षणत्वे चात्मवद्बाधायोगात्, उभयविलक्षणत्वे चोभयानुपपत्तेः ।

ननु ख्यात्यभावबाधाभावयोः सत्त्वासत्त्वे एव प्रयोजके लाघवात्, न तु सदसद्विलक्षणत्वे गौरवात् । ततश्च ख्यातिबाधोपपादनाय तदुभयवैलक्षण्यमेवारोपिते वाच्यमिति चेत् । न । लाघवेन सत्त्वासत्त्वयोः ख्यातिबाधप्रयोजकत्वे स्थिते तद्वैलक्षण्ययोस्तदभावप्रयोजकताया न्याय्यत्वात् । ततश्च भ्रमविषये ख्यातिबाधोपपत्तये सत्त्वासत्त्वे एव कथञ्चित्कल्पनीये न तु तद्विलक्षणत्वमिति नार्थापत्त्यापि तत्सिद्धिः । तस्मादारोपितमनिर्वचनीयमिति मनोरथमात्रमिति ।

अत्रोच्यते । सद्विलक्षणत्वमेवानिर्वचनीयत्वम् । न चासत्यतिव्याप्तिः । असत्प्रत्ययस्य[1] विकल्पमात्रतयार्थशून्यत्वान्निःस्वरूपे निर्धर्मे तस्मिन्कस्यापि लक्षणस्यातिव्याप्तिशङ्काया एवानुदयात् । यद्यपि वेदान्तवृद्धैः सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वमनिर्वचनीयत्वमिति तत्रतत्रोक्तं, तथापि तत्सर्वं न लक्षणशरीरे विवक्षितम्, किन्तु भ्रमविषयस्यानिर्वचनीयत्वसाधकानुमानार्थापत्त्योः स्वस्वमतानुसारेण वादिनामर्थान्तरत्वभ्रमवारणायाहृदयवाचामितिन्यायेन तत्तदभिमतबुद्धिविरोधिसाध्यमेव दर्शितम् । एवं चासत्प्रतियोगिकवैलक्षण्यमसंभवीत्यादिदोषाणामनवकाशः ।

अथवा मिथ्यात्वमेवानिर्वचनीयत्वम् । तदुक्तं पञ्चपादीकृद्भिः—"मिथ्याशब्दोऽपह्नववचनोऽनिर्वचनीयतावचनश्च" इति । मिथ्यात्वं च स्वैय-

---

१ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । २ असति ।

धिकरण्यानधिकरणात्यन्ताभावप्रतियोगित्वम्। परमार्थत्वेनाभिमते वस्तुन्यसंभावितधर्मस्यैव मिथ्यापदार्थत्वात्। परमार्थवस्तूनां च वृत्तिमतां नियमेन पैरः[1] स्वव्यधिकरणात्यन्ताभावप्रतियोगित्वस्वीकारात्। अध्यस्तप्रतियोगिकाभावस्य तु स्वोपाधौ त्रैकालिकनिषेधधीगम्यस्य निरधिकरणाधिष्ठानचिन्मात्रतया वा तन्मात्राश्रिततया वा प्रतियोगिवैयधिकरण्यानधिकरणत्वोपगमेन मिथ्यावस्तुन्युक्तलक्षणसंभवात्। न च भावस्य स्वाभावाश्रितत्वं तत्सामानाधिकरण्यं वा स्वकाले विरोधादसंभवीति वाच्यम्। परमार्थवस्तुनि तद्विरोधेऽपि मिथ्यावस्तुनि तदभावात्। परमार्थे वस्तुन्यसंभावितस्यैव मिथ्यापदार्थत्वादित्युक्तत्वात्। मिथ्यात्वे वक्ष्यमाणप्रमाणविरोधेन परोक्तलाघवानवताराच्च।

ख्यातत्वे सति बाध्यत्वानुपपत्तिश्च तत्र प्रमाणम्। तथाहि—भ्रमविषयस्य देशान्तरादौ सत्त्वेऽत्यन्तासत्त्वे वा पुरोवर्तितयाऽपरोक्षप्रथानुपपत्तिरित्युपपादितम्। तत्रैव च सत्त्वे बाधानुपपत्तिः। बाधो नाम विपर्यस्तवस्तुतत्त्वनिर्धारणनिदाना तदाश्रितनिवृत्तिर्वा तत्रैव[2] तत्सामर्थ्येन[3] तस्य[4] त्रैकालिकनिषेधबोधनं वा। तदुभयमप्यारोप्यस्य[5] प्रतिपन्नदेशकालोपाधौ सत्त्वे नावकल्पते। शुक्त्यादौ परमार्थत्वेनाभिमतरूपादौ तदभावात्। तस्मादध्यस्तस्य कुत्रापि कदापि सत्त्वायोगात् सद्विलक्षणत्वरूपं मिथ्यात्वरूपं वाऽनिर्वचनीयत्वं सिद्धम्।

एवं विमतं सद्विलक्षणं बाध्यत्वात्, यन्नैवं न तदेवं यथा सदात्मेति व्यतिरेक्यनुमानमपि तत्र मानम्। न च साध्याप्रसिद्धिः, सतः प्रतियोगिनः प्रसिद्धतया तद्वैलक्षण्यस्यापि सामान्यतः प्रसिद्धत्वात्। विनापि

---

१ स्वाश्रये। २ विपर्यस्तवस्तुनि। ३ तत्त्वनिश्चयसामर्थ्येन। ४ तदाश्रितस्य। ५ निवृत्तिनिषेधबोधने अपि।

तत्प्रसिद्ध्या सत्त्वाबाध्यत्वयोरात्मनि व्याप्यव्यापकभावनिश्चयाद्विप्रतिपन्ने विषये व्यापकाभावेन व्याप्याभावानुमानसंभवाच्च । न च बाध्यत्वं दुर्निरूपं, बाधनिरूपणेनैव तत्प्रतियोगित्वरूपस्य तस्यापि निरूपणात् ।

एतेन सत्त्वासत्त्वयोः ख्यातिबाधप्रयोजकत्वादर्थापत्तेरन्यथैवोपपत्तिः, अनुमानं चाप्रयोजकमिति परास्तम् । भ्रमविषये सत्त्वासत्त्वसंभवस्योपपादितत्वात् । किञ्च, सत्त्वासत्त्वयोः ख्यातिबाधप्रयोजकत्वं न तावत्तद्व्याप्यत्वम्, सत्त्वेऽपि धर्मादेरपरोक्षप्रतिभासाभावात्, असतोऽपि नरशृङ्गादेर्बाधाभावात् । नापि तद्व्यापकत्वं तत्प्रयोजकत्वं, शुक्तीदमंशरजतसंसर्गस्यापरोक्षस्य कुत्रापि सत्त्वाभावात् बाध्यस्यासत्त्वे दृष्टान्ताभावाच्च । तस्माद्यत्किञ्चिदेतत् ।

ततश्च विवादपदं रजतज्ञानं पुरोवर्तिरजतविषयं पुरोवर्तित्वप्रकारकरजतसाक्षात्कारत्वात् समीचीनरजतसाक्षात्कारवदित्यनुमानादुक्तयुक्त्यनुगृहीतादनिर्वचनीयरजतसिद्धिः ।

तस्य[1] चाज्ञातसत्त्वे मानाभावात्, प्रतिभाससमकालस्य भावकार्यतयोपादानाद्यपेक्षायां दोषसंस्कारसध्रीचीनेदमाकारान्तःकरणवृत्तिसंसर्गसंजातक्षोभा शुक्तीदमंशाद्यवच्छिन्नचैतन्यनिष्ठा तद्विशेषचैतन्यावारिकाऽनिर्वचनीयाविद्याऽनन्यथासिद्धान्वयव्यतिरेकाभ्यां परिणामितयोपादानं कल्प्यते । इदमंशावच्छिन्नचैतन्यं त्वधिष्ठानतयोपादानम् । दोषादि निमित्तम् ।

तच्चे[2]दमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यनिष्ठाविद्यावृत्तिद्वारा साक्षिभास्यमिति पूर्वाचार्याः । तेषां[3] रजताकाराविद्यावृत्तावनास्थामन्ये वर्णयन्ति । तस्येदमाकारवृत्तिद्वारान्तःकरणोपहिते प्रमातृचैतन्याभेदेनाभिव्यक्तेदमंशावच्छिन्नचैतन्येऽध्यासात् सुखदुःखादिवदनन्यवेद्यत्वस्य तैरेवोक्तत्वात् ।

---

१ भ्रमविषयरजतस्य । २ प्रातिभासिकं रजतं च । ३ पूर्वाचार्याणाम् ।

उत्पत्त्यैव साक्षिसंबद्धेऽज्ञातसत्त्वरहिते तस्मिन्स्वाकारवृत्तिसाध्ययोः साक्षि-संबन्धावरणनिवृत्त्योरयोगेन तत्कल्पकाभावात् । इदंरजतसंसर्गाध्यासेऽहङ्कारा‌द्यध्यासे च तदाकारवृत्तिं विनापि तदवभासिसाक्षिचैतन्यस्यैवानिर्वचनीयविषयतया भ्रान्तित्वम् । विषयोत्पत्तिनाशाभ्यामेव तत्संवलिताकारेणोत्पत्तिनाशौ च तैरुपेयेते । एवं रजतांशेऽपि तदवभासिसाक्षिचैतन्यस्यैव भ्रान्तित्वादिकमुपपद्यते । स्मृतिहेतुसंस्कारोऽपि सुखादाविव विषयसंवलितचैतन्यनाशादेव वा पूर्वोक्तरीत्या वोपपद्यत इति किं हीयते रजतगोचराविद्यावृत्त्या विनेति मन्यन्ते । पञ्चपादीकृतोऽपि "मिथ्यालम्बनं ज्ञानं मिथ्याज्ञानं, न ज्ञानस्य स्वतो मिथ्यात्वमस्ति, बाधाभावात्" इति वदन्तः स्वरूपेणापि साध्यतया मिथ्याभूतामविद्यावृत्तिरूपां भ्रान्तिं न मृष्यन्त इति च वदन्ति । सर्वथापि शुक्तिरजतरज्जुसर्पमृगतृष्णिकोदकाद्यध्यासोऽनिर्वचनीयो निरुपाधिकश्च । स्फटिकलौहित्यादौ वस्तुतो लोहितस्य जपाकुसुमादेरिवात्र वास्तवसर्पादेः संनिहितस्याभावात् ।

एवं चिद्रूपेण स्वतःप्रकाशमाने प्रत्यगात्मनि पूर्वपूर्वाहङ्कारसंस्काररञ्जिताऽद्वयानन्दस्वरूपाच्छादकाऽविद्यापरिणामः कूटस्थचैतन्यसंवलनसंजातप्रकाशो विविधवेदनावैतरणीनिःसरणमूलभूमिरहङ्कारो निरुपाधिकाध्यासो वेदितव्यः । तत्तादात्म्यादेव कल्पितात्कूटस्थोऽपि चिदात्मा मिथ्यैव कर्ता भोक्तेति प्रसिद्धिमुपगतः । तत्रैवाहङ्काररूषिते प्रतीचि प्राणेन्द्रियशरीराणि निरुपाधिकान्येवाध्यस्यन्ते तत्तदुपाधिकाश्च तत्तद्धर्माः ।

एवं वियदादिप्रपञ्चोऽप्यस्मात्प्रत्यविषयावृते सत्यज्ञानानन्दात्मके ब्रह्मणि निरुपाधिकाध्यास एव, दृश्यत्वाज्जडत्वाच्च । इतरथा दृग्दृश्ययोः संसर्गानिरूपणात् दृश्यत्वानुपपत्तेः । सः[3] चावृतचैतन्येऽध्यस्तत्वात् अविद्यामा-

---

1 अनिर्वचनीयरजतादौ । २ रजताकाराविद्यावृत्तिः । ३ प्रपञ्चश्च ।

त्रदोषजन्यत्वाच्च मानं विनाऽज्ञातसत्ताको व्यावहारिकश्च भवति । तस्य च यावत्प्रमातृसत्त्वमबाधितत्वात् स्वोचितार्थक्रियासमर्थत्वाच्च तद्विषयं प्रत्यक्षादिकं व्यावहारिकप्रामाण्यमश्नुते ।

यदा त्वविद्यातत्कार्यात्मकाध्यात्मादिप्रपञ्चजातं "नेह नानास्ति किञ्चन" "एकमेवाद्वितीयम्" "स एष नेति नेत्यात्मा" इत्यादिश्रुतिभिः प्रविलाप्य तत्साक्षिणौ कूटस्थसदानन्दचिन्मात्रौ प्रत्यगात्मपरमात्मानौ संभाव्य तत्त्वमादिवाक्यात् तयोरत्यन्ताभेदं निर्विचिकित्समीक्षते, तदा निवृत्तसनिदानानर्थव्रातनिरतिशयानन्दानुभूतिब्रह्मात्मनैवावस्थितः कृतकृत्यो भवति, "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" "कृतं कृत्यं प्राप्तं प्रापणीयमात्मलाभान्न परं विद्यते" इत्यादिश्रुतिस्मृतिभ्यः ।

ननु जीवपरयोर्भेदे भासमाने कथं तत्त्वमादिवाक्यात् तदभेदानुभवो भवेत् । न च घटाकाशादाविव भेदप्रतीतेरौपाधिकभेदविषयत्वान्न वास्तवाभेदधीविरोधितेति वाच्यम् । अविद्याकार्यस्यागन्तुकतयानादिजीवावच्छेदकत्वायोगात् । अविद्यायाश्च चिन्मात्रसंबधिन्या अवच्छेदकत्वे चिन्मात्रे प्रदेशभेदाभावेन तत्संबन्धस्याव्याप्यवृत्तित्वायोगात्, कल्पितप्रदेशवृत्तित्वे चाविद्यायाश्चिन्मात्राश्रितत्वोपगमव्याहतिप्रसङ्गात् तत्संबन्धस्य तत्र व्याप्यवृत्तित्वं वाच्यम् । ततश्च शङ्खस्य श्वैत्येनेव चैतन्यस्य कार्त्स्न्येनाविद्ययावच्छिन्नत्वादवच्छिन्नानवच्छिन्नभावेन भेदानुपपत्तिः । घटसंबन्धस्य तु कल्पिताकाशप्रदेशवृत्तित्वमिति तदुपपत्तिः । किञ्चाविद्यानवच्छिन्नस्येश्वरत्वपक्षे घटावच्छिन्नाकाशसंसृष्टेष्वविद्याकार्येषु भूतभौतिकेषु तदनवच्छिन्नेश्वरचैतन्यस्य संबन्धाभावादीश्वरस्य सर्वज्ञत्वसर्वकारणत्वसर्वनियन्तृत्वादिकं श्रुतिन्यायसिद्धमनुपपन्नं स्यात् । जीवाश्रयाविद्येति पक्षेऽपि तदवच्छिन्नस्यैव जीवत्वोपगमे तदनवच्छिन्नस्य परस्य सर्व-

ज्ञत्वाद्यनुपपत्तिस्तुल्या। तस्मान्न घटाकाशादिदृष्टान्तेन जीवपरभेदस्यौपाधिकत्वसिद्धिरिति। सत्यम्। अत एव वेदान्तेषु एकस्यैव चिदात्मनो बिम्बप्रतिबिम्बभावेन भेदोपाधिरविद्येत्यत्र दर्पणजलादिकमुदाहरन्ति।

तत्र प्रतिबिम्बत्वं नाम स्वप्रतियोगिकोपाधिप्रयुक्तव्याप्यवृत्तिभेदवत्त्वेनोपाधिसंसृष्टतया प्रतिभातत्वम्। बिम्बत्वं तु तादृशभेदवत्त्वेनोपाध्यसंसृष्टतया प्रतीतत्वम्। अवच्छिन्नत्वानवच्छिन्नत्वयोरतिव्याप्तिपरिहाराय व्याप्यवृत्तीत्युक्तम्। दर्पणादावामलकादिप्रतिबिम्बादिगतभेदे तथात्वदर्शनात्। मुखादिप्रतिबिम्बस्थलेऽपि देहाद्यवयवस्य तस्यैव बिम्बादिभावो न देहादेरिति नाव्याप्तिः। चिन्मात्राश्रिताविद्यायामपि चिन्मात्रस्यैवाहमज्ञ इत्यादिरूपेण चिद्रूपेश्वरभिन्ने जीवभावप्रतीतेरुपपद्यते तयोर्बिम्बादिभावः। न चामूर्तस्य नीरूपस्य प्रतिबिम्बासंभव इति सांप्रतम्। गुणकर्मादेरपि प्रतिबिम्बदर्शनात्, वस्तुतो निर्गुणे चिदात्मन्यपि पराभिमतद्रव्यत्वाभावात्, रूपादिरहितस्याप्याकाशस्याभ्रादिभिः सहाल्पेऽपि जले प्रतिबिम्बदर्शनाच्च। अत एव प्रतिबिम्बाकाशदेशे बिम्बभूतमहाकाशस्यापि दर्शनात् बिम्बचैतन्यरूपेश्वरस्य प्रतिबिम्बभूतजीवोपाधिषु यथेष्टसंबन्धसंभवेन तस्य सर्वकारणत्वसर्वनियामकत्वाद्युपपत्तिः।

ननु दर्पणे मुखच्छायेत्यनुभवेन प्रतिबिम्बत्वस्य च्छायात्वात् तस्याश्च च्छायावतो वस्तुतो भिन्नत्वान्न तत्रोक्तलक्षणं संभवति। न चाप्रतिबिम्बस्य बिम्बाभेद इति चेत्। मैवम्। छायाया आलोकाभावत्वे भावरूपतमोरूपत्वे वा प्रतिबिम्बस्य बिम्बानुसारेण लोहितशुक्लपीतादिरूपविशेषप्रतिभासायोगात्, छायारहितादित्यादेरपि प्रतिबिम्बदर्शनाच्च, मुखनासिकाच्छिद्रतद्गतदन्ततालुमलरोमादिविशेषप्रतिभासानुपपत्तेश्च। न च च्छायात्वविरोधिप्रत्ययशतस्यान्यथानुपपद्यमानस्यैकेन च्छायात्वप्रत्ययेन

भ्रमत्वं शक्यं कल्पयितुम् । स्फीतालोकयुक्तेऽपि दर्पणतलादौ प्रतिबिम्ब-दर्शनेन तत्र च्छायाया असंभवाच्च । तस्माद्वस्तुतश्छायात्वरहितेऽपि प्रति-बिम्बे बिम्बचलनाधीनचलनवत्त्वादिच्छायासादृश्येन च्छायाशब्दप्रत्ययो-पपत्तिः । तर्हि तत्र वास्तवमनिर्वचनीयं वा मुखान्तरं बिम्बसंनिधानादु-त्पद्यतां, न तु तदेव तदिति चेत् । न तावद्दर्पणतलावयवानां वास्तव-मुखाकारपरिणामः संभवति । स्पर्शनेन समतलताया एवोपलम्भात्, तदान्तरावयवेष्वतिनिबिडेषु मुखाकारपरिणामावकाशासंभवात्, तदान्त-रावयववदचाक्षुषत्वापाताच्च । गजाद्याकारपरिणतदर्पणादेरतिगुरुत्वापा-तेन दुर्वहत्वं च स्यात् ।

किञ्च, निमित्तापायेऽपि नैमित्तिकद्रव्यापायाभावात् बिम्बापायेऽपि दर्पणादिपरिणामः प्रतिबिम्बो यावदायुरवतिष्ठेत । न चेष्टापत्तिः । दृश्य-मान एव दर्पणादौ द्रष्टुः पृष्ठदेशनिष्ठोष्ट्रादेरपगमे तदैव तत्र प्रतिबिम्बा-पायदर्शनात्, ममैवेदं मुखमिति प्रत्यभिज्ञाविरोधाच्च न वस्तुतो मुखा-न्तरं तदिति शक्यमभ्युपगन्तुम् । नापि तदनिर्वचनीयम्, नेदं रजत-मितिवन्नेदं मुखमिति मुखस्वरूपस्य बाधाभावात्, नात्र मुखं किन्तु ग्रीवा-यामेवेति दर्पणादौ मुखसंसर्गमात्रबाधपुरःसरमन्यत्र सत्त्वनिश्चयाच्च । तथा "नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" इति स्मृतौ जगदवभासकादित्यस्यैव जलस्थत्वे-नोक्तत्वान्न प्रतिबिम्बं बिम्बाद्व्यतिरिच्यते । किञ्च, ग्रीवास्थमुख एव दर्पण-स्थत्वप्रत्यङ्मुखत्वादिधर्ममात्रारोपेणैव प्रतिबिम्बभ्रमोपपत्तौ गौरवेण न धर्मि-णोऽपि मुखस्यारोपितत्वं युक्तं कल्पयितुम् । अत एव स्वमुखतदवयवा-न्विशेषतः स्वचक्षुषा द्रष्टुं निर्मलदर्पणाद्युपाददते देहाभिमानिनः ।

ननु प्रतिबिम्बभ्रमे यावन्तो दृश्यन्ते स्वमुखावयवविशेषाः स्वपृष्ठदेश-

वर्तिनो वृक्षगजादयश्च तेषां सर्वेषां स्वचक्षुरसंनिकृष्टानां कथं चक्षुषा ग्रहणं, तदग्रहणे वा कथं तत्र विपरीतधर्मारोप इति चेत् । न । स्वच्छोपाधिप्रतिहतचाक्षुषावयवैः प्रत्यङ्मुखैः संनिकृष्टेषु स्वमुखतदवयवादिषु स्वरूपेण गृहीतेषु तदधीनक्षोभया तद्गतयाऽविद्यया विपर्यस्तधर्मजातारोपोपपत्तेः । तदुक्तम्—"दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥" इति । न च प्रतिहतचक्षुषा तत्तदधिष्ठानस्वरूपविशेषबोधे तदविद्यानिवृत्तेः कथं तद्विपरीतधर्मारोप इति वाच्यम् । उपाध्युपहितसंनिकर्षोत्थबुद्धेरुपाधिना प्रतिबद्धशक्तितया स्वगोचराविद्याया अनिरासकत्वात् । प्रत्युत तत्त्वक्षोभणद्वारा तद्विलासानुगुणैव साऽवतिष्ठते ।

ये तु पुनर्वास्तवमुखादेरेव भेदाद्यारोपाधिष्ठानत्वमङ्गीकृत्य तस्य प्रतिहतेन्द्रियसंनिकर्षं नाङ्गीकुर्वन्ति ते कथं स्वरसत इन्द्रियासंनिकृष्टेषु मुखनासिकाद्यन्तर्वर्तिषु पृष्ठोर्ध्वदेशादिवर्तिषु च वस्तुषु प्रतिबिम्बभ्रममपरोक्षाधिष्ठानबोधाधीनमुपपादयेयुः । कथं वा तेष्वसंनिकृष्टेष्वभिज्ञाप्रत्यभिज्ञे स्याताम् । तस्मात्प्रतिहतचक्षुषा भासमाने मुखादा भेदमध्यस्य तत्रैव प्रतिबिम्बे बिम्बासंभावितधर्मानध्यस्यतीति भेदतत्प्रयुक्तधर्माणामेवानिर्वचनीयत्वं सिद्धम् ।

एवं वस्तुतोऽद्वितीयस्वप्रकाशचिन्मात्रे बिम्बादिभावेनानादिभेदप्रयोजकानिर्वचनीयानाद्यविद्या प्रतिबिम्बरूपजीवं प्रति पूर्णस्वरूपावरणेन तस्याज्ञत्वभ्रान्तत्वादि कल्पयित्वाहङ्काराद्यध्यासपुरःसरं तत्रैव कर्तृत्वादिसमस्तसंसारं कल्पयति । बिम्बरूपस्य त्वीश्वरस्य शक्तितया तत्परतन्त्रा तं प्रति पूर्णस्वरूपमाच्छादयितुमनीशाना तन्नियमिता वियदादिभूतभौतिकाकारेण विवर्तमाना सा तत्सत्तादिप्रदेश्वरसर्वज्ञत्वाद्यनुकूला तस्मिञ्जगदुपादानत्व-

निमित्तत्वनियामकत्वादिधर्मानेव कल्पयति, न तु सांसारिकधर्माधर्मान् । श्रुतिरपि "रूपं रूपं प्रतिरूपो बभूव" इति जीवानां प्रतिबिम्बात्मतामुक्त्वा तस्या मायाप्रयुक्तत्वं दर्शयति । "इन्द्रो मायाभिः पुरुरूप ईयते" इति "एवमेवैषा माया" इत्युपक्रम्य "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इत्यादिश्रुतिरप्यमुमेवार्थं स्वहस्तयति ।

अत एव मायाविद्ययोर्भेद इति मतमपास्तम्, अनिर्वचनीयस्वरूपत्वस्याधिष्ठानावरकत्वस्य विक्षेपहेतुत्वस्य चोभयत्राविशेषाच्च तयोर्वैजात्यायोगात् । क्वचिदावरणविक्षेपप्राधान्येनाविद्या मायेति व्यपदेशभेदः ।

तथा "आभास एव च" "अत एव चोपमा सूर्यकादिवत्" इत्यादित्रोपात्तन्यायैरपि जीवपरयोः प्रतिबिम्बादिभावसिद्धिः । तदेवं जीवेश्वरभेदस्य लौकिकबिम्बप्रतिबिम्बभेदवदौपाधिकत्वात्स्वाभाविकतदभेदानुभवात्तत्त्वमादिवाक्योत्थादाविद्यकद्वैतजालस्य समूलकाषंकषितत्वोपपत्तेः परिपूर्णचिदानन्दब्रह्मभावसिद्धिरिति ।

ननु गुणक्रियापरिच्छेदादिसंसर्गितयानुभूयमानस्य त्वंपदार्थस्य तत्त्वमादिवाक्यादपि कथं तद्रहितब्रह्माभेदानुभवो भवेत् । "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतेरपि प्रत्यक्षविरोधेन जीवस्यासंभावितासङ्गस्वभावावबोधकत्वायोगात् । न चोक्तोदाहरणैस्तदसङ्गत्वं शक्यं संभावयितुम् । तत्र स्फटिकप्रतिबिम्बयोरौपाधिकधर्मसंसर्गित्वेनैव प्रतीतेः । रज्ज्वादिस्तु सर्पाद्यात्मनैव प्रतीयते, न तत्र सङ्गित्वमसङ्गित्वं वा सिद्धमिति न तेनाप्यात्माऽसङ्गत्वसंभावनेति । सत्यम् । अत एव वेदान्तेषु "घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥" इति घटाकाश उदाहृतः ।

---

१ भ्रमादि ।

ननु तस्यापि घटाकाश इत्यादिनाम्ना परिच्छिन्नपरिमाणेन बाह्याकाशभेदेन गमनादिक्रियया दशविंशत्यादिपदार्थस्थितिरूपार्थक्रियया च संसर्गित्वेनानुभवादसङ्गत्वासिद्धेः कुतस्तद्दृष्टान्तेनात्मनि तत्संभवः । न च घटपरामर्शे सत्येव तदनुभवात्तत्सर्वं तस्यैव नाकाशस्येति निश्चीयत इति वाच्यम् । घटरूपस्याप्यालोकपरामर्शे सत्येव प्रतीतेर्घटधर्मत्वाभावप्रसङ्गात् । इच्छाद्युत्पत्तिनाशादेर्विषयपरामर्शाधीनप्रतिभासत्वेऽपि[1] तस्य[2] तत्संसर्गित्वोपगमादिति[3] चेत् । मैवम् । आलोकरूपविजातीयघटादिरूपस्यान्यत एव लब्धसत्ताकस्य सत्तामात्रेणाभिव्यञ्जकालोकस्य नान्तरीयकतया भवतस्तज्ज्ञानस्य च घटादिरूपसत्तायां ज्ञाने चाप्रयोजकत्वेन घटादेः स्वाभाविकरूपत्वोपपत्तेः । इच्छादेरपि विनापि विषयोत्पत्त्यादिकं उत्पत्तिविनाशवत्त्वादिच्छादिस्वरूपज्ञानस्यैव विषयज्ञानाधीनत्वाच्च तदुत्पत्त्यादि तस्य स्वाभाविकमेवेति निश्चीयते । घटाकाशस्य तु परिच्छेदादेः स्वतः सत्त्वे मानाभावात् घटादिगतपरिच्छेदादिप्रतीतावेव प्रतीतेश्च घटादिगतमेव परिच्छेदभेदादिकम् । आकाशं तु कालत्रयेऽपि तदसङ्गीति तदापि निश्चीयते । एवमेव चिदात्मन्यपि परिच्छेदभेदकर्तृत्वभोक्तृत्वादिविकारजातस्य जाग्रत्स्वप्नयोः स्थूलसूक्ष्मशरीरसत्त्वे सत्त्वात् तदभावे च सुषुप्त्यादावभावाद्देहादौ तत्प्रतीतिदशायामेव प्रतीतेश्च तदीयमेव तद्विकारजातम् । चिदात्मा तु स्वतोऽपरिच्छिन्नकूटस्थाऽसङ्गस्वभाव एवेति संभावनोपपत्तिः । ततश्चैवं संभावितस्वभावस्य त्वंपदार्थस्य तत्त्वमादिवाक्यादप्रत्यूहमधिकारिणोऽखण्डब्रह्माभेदसाक्षात्कार उपपद्यते ।

ननु किमिदं ब्रह्मणोऽखण्डत्वम् । संसर्गागोचरप्रमाविषयत्वमिति चेत् ।

---

१ यस्मिन्सत्येव यत्प्रतीयते तत्तस्यैवेत्यनेन न्यायेन । २ इच्छाद्युत्पत्तिनाशादेः । ३ इच्छादिसंबन्धित्वाङ्गीकारात् ।

मैवम्। निष्प्रकारकज्ञानस्यापि विशेष्यासंबन्ध्यप्रकारकत्वेनाबाधितार्थत्वेन वा स्वविषयाज्ञानतत्कार्यनिवर्तकत्वेन वा प्रमात्वोपपत्तेः। इतरथा पराभिमतनिर्विकल्पकस्य सोऽयं देवदत्त इति वाक्योत्थज्ञानस्य च प्रमात्वं न स्यात्। न च सोऽयमित्यत्र देवदत्ते तत्तेदन्तावैशिष्ट्यस्य तदन्यतरवैशिष्ट्यस्य वा वाक्यप्रमेयत्वात् तदुत्थज्ञानस्य न संसर्गागोचरत्वमिति वाच्यम्। तत्र तदेतद्देशकालरूपतत्तेदन्ताविशिष्टरूपद्वयस्याभिज्ञाभ्यामेव सिद्धत्वेनोभयोरप्यनुवादार्हत्वात् विध्यनुवादनियामकाभावाच्च द्वयोरन्यतरस्य वा वैशिष्ट्यस्य वाक्यप्रमेयत्वायोगात्। एकस्य पूर्वोत्तरदेशकालवैशिष्ट्यं पूर्वमसिद्धं तद्वाक्यप्रमेयमिति चेत्। तर्हि प्राप्ताप्राप्तविवेकेन देवदत्ते भेदभ्रमनिरासरूपप्रयोजनानुरोधेन च तदेकत्वमेव तद्वाक्यप्रमेयमित्यभ्युपेयम्। तत्र च यदा यदा तद्देशकालविशिष्टरूपं तदा तदैतद्देशादिविशिष्टरूपाभावात् एतत्कालादिविशिष्टरूपं यदा तदा तत्कालादिविशिष्टरूपाभावात्, भावे वा बाल्यकौमाराद्यवस्थाविशेषविशिष्टविषयविधिनिषेधशास्त्राणां युगपत्प्रवृत्तिप्रसङ्गात्। विशिष्टयोरैक्ये विशेषणयोरप्येककालीनत्वापातेन तद्भावाभावाभ्यामपि व्यवस्थायोगात्। एकोपलक्षितस्येतरविशिष्टेनैक्येऽपि यावदुपलक्षितस्वरूपं विशिष्टरूपापत्तेरुक्तदोषानिस्तारात्। उभयोपलक्षितदेवदत्तस्वरूपं सोऽयमिति पदद्वयेन जहदजहल्लक्षणयोपादाय तदैक्यमेव तत्समानाधिकृतवाक्यप्रमेयम्। ततश्च तस्य स्वपदोपस्थापितपदार्थसंसर्गागोचरप्रमाजनकत्वरूपमखण्डार्थत्वं सिद्धम्।

एवं प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्यमप्यखण्डार्थमेव। तत्रापि प्रकाशादिपदार्थवैशिष्ट्यस्य प्रत्यक्षत एव ज्ञातत्वात्तत्राज्ञानजिज्ञासयोरभावात्, कश्चन्द्र इति चन्द्रप्रातिपदिकार्थमात्रस्यैवाज्ञातस्य जिज्ञासाया दृष्टत्वात्, पृष्टादन्यविषयोत्तरवाक्यस्य प्रामाण्यायोगात्, चन्द्रपद-

वाच्यत्वस्याचन्द्रव्यावृत्तेश्च साक्षात्प्रश्नपदानुपात्तत्वात्, चन्द्रो नाम कश्चित्स चन्द्रपदवाच्योऽचन्द्राद्व्यावृत्तश्चेत्याप्तोपदेशादेव सामान्येन तयोरपि प्रागेव ज्ञातत्वाद्व्यक्तिविशेषे तदज्ञानस्य तत्र चन्द्रत्वाज्ञानप्रयुक्तत्वात् अज्ञातचन्द्रप्रातिपदिकार्थविशेष एव वस्तुतः प्रकृष्टप्रकाशपदवाच्यसंबन्धी तल्लक्षणवाक्येन लक्षणया चन्द्रप्रातिपदिकार्थमात्रतात्पर्यानुपपत्तिबीजया प्रतिपाद्यत इति तदप्यखण्डार्थमेव।

एवं "ब्रह्मविदाप्नोति परम्" इत्युपक्रमे किं तद्ब्रह्मेति ब्रह्मपदप्रातिपदिकार्थमात्रजिज्ञासायां "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मस्वरूपलक्षणवाक्यमपि ब्रह्मप्रातिपदिकार्थमात्रे निरतिशयमहत्त्वयोग्येऽद्वितीयवस्तुनि तात्पर्यानुपपत्त्या सत्यत्वादिविशिष्टवाचकैः सत्यादिपदैरनृतजडादिविरोधिनो वस्तुतः सत्यत्वाद्याश्रयभूतान्व्यक्तिविशेषान्भागत्यागलक्षणयोपादाय तदात्मकमेकमेव ब्रह्मप्रातिपदिकार्थं बोधयदपर्यायपदैरेकप्रातिपदिकार्थमात्रप्रतिपादनादखण्डार्थमिति निश्चीयते। तथा "यतो वा इमानि भूतानि जायन्ते" इत्यादितटस्थवाक्यमपि ब्रह्मप्रातिपदिकार्थमात्रपरत्वाल्लक्षणवाक्यत्वाच्च कार्यलिङ्गकानुमानसिद्धनिमित्तत्वोपादानत्वानुवादेन तदाश्रयाभेदप्रतिपादनेन तद्भेदाशङ्कां निराकुर्वद्ब्रह्मप्रातिपदिकार्थे पर्यवस्यतीति भवत्यखण्डार्थम्।

एवं तत्त्वमादिवाक्यमपि कार्यकारणद्रव्यमात्रनिष्ठसमानाधिकरणवाक्यत्वात् सोऽयमितिवाक्यवदखण्डार्थमेव।

ननु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यवान्तरवाक्यादेव ब्रह्मणः सर्वभेदनिरासेनाद्वितीयत्वप्रतिपादनात् तत एव प्रत्यगभेदस्यापि सिद्धेः किं तत्त्वमादिवाक्येनेति चेत्। न। जीवस्वरूपस्य वियदादिप्रपञ्चवदाविद्यकतया बाध्यत्वेऽपि ब्रह्मणोऽद्वितीयत्वाद्युपपत्तेस्तावन्मात्रेण महावाक्यविवक्षितवास्तवप्रत्यग्ब्रह्माभेदासिद्धेः।

ननु "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः," "ध्यायतीव लेलायतीव," "अत्रायं पुरुषः स्वयंज्योतिः", "स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति," "असङ्गो ह्ययं पुरुषः," "अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव," "स वा एष महानज आत्मा," "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्," "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्," "आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम्," इत्यादि त्वंपदार्थशोधकश्रुतिपर्यालोचनया जीवस्वरूपस्य सर्वोपप्लवरहितसच्चिदानन्दघनतया निश्चये सति तदभेदं विना ब्रह्मणि बहुशः श्रूयमाणाद्वितीयत्वानन्तत्वसर्वात्मत्वाद्यनुपपत्त्यैव जीवपराभेदप्रतिपत्तौ कृतं तत्त्वमस्यादिमहावाक्यैरिति चेत्। मैवम्। पदार्थज्ञानस्य स्वतःप्रयोजनहीनतया तद्विषयवाक्यानां तत्रैव तात्पर्यायोगात्। अतत्परवाक्यानां तदनुपपत्तिप्रसूतार्थापत्तेर्वा प्रत्यक्षादिविरोधे प्रामाण्यायोगात्। तत्त्वंपदार्थयोः शुद्धेरभेदस्य चासिद्धिप्रसङ्गात्।

अत एवावान्तरवाक्यार्थमहावाक्यार्थसंभावनाहेतुभिर्भेदप्रपञ्चमिथ्यात्वादिविषयदृश्यत्वादियुक्तिभिश्च विवक्षितजीवपराभेदसिद्धौ किं वेदान्तवाक्यैरिति परास्तम्। प्रत्यक्षादिविरोधे युक्तिमात्रस्य स्वातन्त्र्येण विवक्षितार्थसाधकत्वायोगात्। महावाक्यानां तु षड्विधतात्पर्यलिङ्गैरुपक्रमोपसंहारैकरूप्यादिभिरुपेतानां जीवपराभेदतात्पर्यवतामपौरुषेयत्वेन निरस्तसमस्तशङ्काकलङ्कतयाऽसंदिग्धाविपर्यस्तधीहेतुत्वेन निरपेक्षोत्तरप्रमाणतया च द्वैतग्राहिप्रत्यक्षापेक्षया प्राबल्यात्तदपेक्षिततत्त्वंपदार्थसमर्थकत्वेनावान्तरवाक्यानामपि स्वार्थपरत्वोपपत्तेः।

ततश्च तत्त्वावेदकवेदान्तविरुद्धद्वैतग्राहिप्रत्यक्षादीनां व्यावहारिकप्रा-

माण्यव्यवस्थापनक्षमद्वैतमिथ्यात्वविषययुक्त्यनुगृहीतैर्महावाक्यैरेव सोपपत्तिकावान्तरवाक्यशोधिततत्त्वंपदार्थौ भागत्यागलक्षणयोपादाय तदभेदप्रमा मोक्षैकोपायभूता निष्पाद्यत इति भवन्तितरामर्थवन्ति तानि महावाक्यानीत्युत्पश्यामः । "स आत्मा तत्त्वमसि" इति बहुशो जीवपराभेदमुपदिश्य "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये", इति तदभेदज्ञानस्यैवार्थोपदेशप्राप्तस्य मोक्षहेतुत्वाभिधानात् । "तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्" इत्यादिना चाभेदज्ञानस्यैव साक्षान्मोक्षहेतुत्वोक्तेः । "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" "अविभागेन दृष्टत्वात्" इत्यादि सूत्रोपात्तन्यायाच्च जीवपराभेदबोधस्यैव मोक्षोपायत्वं, न सांख्याद्यभिमतभिन्नात्मज्ञानस्य । तथा सत्युपक्रमादिभिरद्वितीयब्रह्माभेदपरवेदान्तवाक्यजातस्यानर्थक्यप्रसङ्गात् । "एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः", "अनीशया शोचति मुह्यमानः" इत्यादिश्रुतिभिर्जीवस्य ब्रह्मभावावारकाविद्याविलासत्वेनावेदितसंसारानर्थव्रातस्य तदविद्यानिवर्तकाभेदसाक्षात्कारं विनात्यन्तिकनिवृत्त्ययोगाच्च । तथा च स्मृतिः—"एतावदेव मनुजैर्योगनैपुणबुद्धिभिः । स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥" इति । तस्मात्त्वंपदार्थपरिशोधकावान्तरवाक्यतदनुगुणयुक्त्यनुगृहीतमहावाक्यसंजातकूटस्थसदानन्दचिद्घनब्रह्माभेदसाक्षात्कारादेव समूलानर्थनिवृत्त्या स्फुरद्ब्रह्मभावावस्थानरूपमोक्षसिद्धिरिति सिद्धम् ।

ननु कथं परोक्षधीसमर्थाच्छब्दादपरोक्षधीजन्म । न हि जातुचित्कुटजाद्वटाङ्कुरो जायते । न च दशमस्त्वमसीतिवाक्यादहं दशमोऽस्मीत्यपरोक्षधीदर्शनात् तत्त्वमसीति वाक्यादपि प्रत्यगात्मविषयात् अहं ब्रह्मास्मीत्यपरोक्षधीरेव स्यादिति वाच्यम् । तत्राप्यपरोक्षज्ञानकरणतया क्लृप्तेन

चक्षुषा मनसा वा देहस्यात्मनो वा दशमत्वेनापरोक्षज्ञानोत्पत्तौ दशमस्त्वमसीति वाक्यस्य सहकारिमात्रतया तत्करणत्वाभावात् । इहापि "मनसैवानुद्रष्टव्यम्", "दृश्यते त्वग्र्यया बुद्ध्या", इत्यादि श्रुतिपर्यालोचनया तत्त्वमादिवाक्यात्परोक्षतया निर्णीते ब्रह्मात्मन्यादरदीर्घकालनैरन्तर्यसेवितमननध्यानाभ्यासपरिपाकसचिवान्तःकरणादेवाविद्यानिवृत्तिक्षमाऽपरोक्षधीर्जायत इति युक्तं कल्पयितुम् । ननु "यत्साक्षादपरोक्षाद्ब्रह्म", "य आत्मा सर्वान्तरः" इत्यादिश्रुतिसिद्धस्वप्रकाशापरोक्षस्वभावे ब्रह्मात्मनि परोक्षधियं जनयतो वाक्यस्याप्रामाण्यं स्यादिति चेत् । मैवम् । तत्त्वमादिवाक्यादपरोक्षस्वभावं ब्रह्मैवाहमित्याकारैव धीर्जायते, न तु परोक्षं ब्रह्माहमित्याकारा येनापरोक्षस्य वस्तुनोऽन्यथाविषयीकरणात् साऽप्रमा स्यात् । तथापि स्वयं शब्दजन्यत्वात् परोक्षैवावतिष्ठते । न हि द्रव्यं द्रव्यतया विषयीकुर्वज्ज्ञानं स्वयमद्रव्यमित्येतावता न प्रमा भवतीति । न च ध्यानप्रकर्षजसाक्षात्कारस्य शीतार्तभावितप्रबलानलसाक्षात्कारवत् भ्रमत्वप्रसङ्ग इति वाच्यम् । तत्र मानान्तरविसंवादादप्रामाण्यकल्पनात् । अद्वितीयब्रह्माभेदध्यानजसाक्षात्कारे तु विसंवादिद्वैतग्राहिप्रत्यक्षादेः प्रबलश्रुत्यैव बाधितत्वात्संवादाच्च प्रामाण्योपपत्तेः । ततश्च ब्रह्मसाक्षात्कारो न शब्दकरणकः साक्षात्कारत्वात्, तथा स इन्द्रियकरणकः जन्यसाक्षात्कारत्वात् घटसाक्षात्कारवत्, तत्त्वमादिवाक्यं परोक्षधीकरणं वाक्यत्वात् ज्योतिष्टोमादिवाक्यवत् इत्याद्यनुमानात्तत्त्वमादिवाक्यान्नापरोक्षधीरिति ।

अत्रोच्यते । न तावच्छब्दस्य परोक्षधीकरणतैवेति नियन्तुं शक्यम् । दशमस्त्वमसीत्यादिवाक्ये व्यभिचारात् । न च तत्रापीन्द्रियस्यैव करणत्वं शब्दस्य सहकारित्वमिति वाच्यम् । ऐन्द्रियकज्ञाने शब्दस्य व्यभि-

१ दशमस्त्वमसीत्यादिवाक्योत्थज्ञानेऽपि ।

चारेण सहकारित्वायोगात् । न च तत्र शाब्दत्वातिरेकेण जातिरुपाधिर्वा विशेषः कश्चिच्छक्यो वदितुं येन तद्विशेषवत्यपरोक्षज्ञाने शब्दस्याव्यभिचारेण सहकारिता स्यात् ।

ननु समनस्केन्द्रियसंनिकर्षे सत्यप्यनुत्पद्यमानज्ञाने शब्दस्याव्यभिचारेण सहकारितेति चेत् । न । उपदेशं विनापि पश्चात्कचिद्विचारादिनोत्पद्यमानदशमत्वादिज्ञान एव व्यभिचारात् । युगपद्बुभुत्सिताबुभुत्सितसंनिकर्षे सत्यपि बुभुत्सितोपलम्भसमयेऽनुत्पद्यमानाऽबुभुत्सितज्ञाने पश्चादुपदेशं विनापि तत एव संनिकर्षादुत्पत्तेर्बहुलमुपलम्भात्तत्रापि तद्व्यभिचारस्य दुरपह्नवत्वात् । तस्माच्छब्दादेव करणाद्दशमत्वादिगोचरशाब्दसाक्षात्काररूपान्तःकरणपरिणामे जनयितव्ये तस्य विषयदेशमभिव्याप्योत्पत्तावनुकूलतयेन्द्रियस्यैव तत्सहकारितेति युक्तमुत्पश्यामः ।

किञ्च,[1]........ ........स्वच्छं स्वोपहितप्रमातृचैतन्यं स्वत एवाभिव्यञ्जयत्तत्तदाकारवृत्तिद्वारा तत्तद्विषयदेशं व्याप्नुवत्तदधिष्ठानचैतन्यविषयाविद्यावरणं निवर्त्य स्वोपहितप्रमातृचैतन्याभेदेन तदभिव्यनक्ति । विषयस्तु पूर्वमपि स्वाधिष्ठानचैतन्यतादात्म्यापन्नोऽपि तस्य प्रमातृव्यवहितत्वादविद्यावृतत्वाच्च स्वयमप्रकाशमानेन तेनाप्रकाशितः स्वाकारवृत्तिमदन्तःकरणसंसर्गदशायामनावृतप्रमातृचैतन्यतादात्म्यापत्त्या सुखादिवदपरोक्षो भवति । तेनात्मनो "यत्साक्षादपरोक्षात्" इति श्रुतेः स्वप्रकाशचिद्रूपत्वमेवापरोक्षत्वम् । जडार्थस्य त्वनावृततत्तादात्म्यमेवापरोक्षत्वम् । वृत्तिज्ञानस्य त्वपरोक्षार्थगोचरत्वमेवापरोक्षत्वमित्यर्थाधीनमेव ज्ञानापरोक्षत्वं, न तु ज्ञानाधीनमर्थापरोक्षत्वम् । न वा करणविशेषाधीनं ज्ञानापरोक्षत्वमिति सिद्धम् ।

---

१ अस्मादग्रे मूलादर्शपुस्तके त्रुटिर्दृश्यते । पुस्तकान्तराभावात्तथैव मुद्रितो ग्रन्थः ।

एवं ज्ञाने परोक्षत्वमपि पूर्वोक्तरीत्या न जातिरूपं, नापि करणविशेषजन्यत्वं, किन्तु परोक्षार्थविषयमेव तत् । अर्थस्य परोक्षत्वं तु पूर्वोक्तप्रमातृचैतन्याभेदरहितत्वमेव, न तु परोक्षज्ञानविषयत्वमर्थस्य परोक्षत्वम् । ज्ञानेऽर्थानपेक्षपरोक्षत्वस्य दुर्निरूपत्वोक्तेः, अस्मदुक्तपरोक्षज्ञानविषयत्वेन तदुक्तावन्योन्याश्रयत्वात् ।

एवं च तत्त्वमस्यादिवाक्यजन्यमपि ज्ञानं तत्त्वंपदार्थयोः पारोक्ष्यसद्वयत्वादि परिहृत्यापरोक्षैकरसाखण्डानन्दप्रत्यङ्मात्रगोचरं निर्विचिकित्समपरोक्षार्थगोचरत्वादपरोक्षमेवेति युक्तमभ्युपगन्तुम् । न चैवमात्मविषयमनुमानादिजन्यमपि ज्ञानमपरोक्षं स्यादिति वाच्यम् । वाक्यार्थभूताखण्डात्मतत्त्वव्याप्तलिङ्गाद्यभावेन तद्गोचरानुमानिकादिज्ञानासंभवात् । "नावेदविन्मनुते तं बृहन्तम्," "नैषा तर्केण मतिरापनेया", "तं त्वौपनिषदं पुरुषम्" इत्यादिश्रुतिभिश्च मानान्तरप्रवेशनिराकरणेन तस्योपनिषदेकगम्यत्वावधारणाच्च । देहादिव्यतिरिक्तानुमानादौ चात्माद्यपरोक्षार्थांशे तदपरोक्षत्वमिष्टमेव, व्यतिरेकाद्यंशे तु परोक्षार्थत्वात्तस्य परोक्षत्वम् । परोक्षत्वापरोक्षत्वयोश्च प्रमात्वाप्रमात्ववदर्थविशेषनिबन्धनोपाधित्वेनाव्याप्यवृत्तित्वमप्युपपद्यते । न चैवं श्रवणानन्तरमेव तत्त्वमादिवाक्यादपरोक्षब्रह्मधीसंभवात् मनननिदिध्यासनवैयर्थ्यं स्यादिति वाच्यम् । अपरोक्षत्वेऽपि तस्य धियोऽसंभावना[1]द्यभिभूतविषयत्वेनानभ्यासदशोत्पन्नजलादिज्ञानवत्तत्सत्तानिर्णयरूपत्वाभावेनाविद्यादिनिवृत्तावक्षमत्वाच्छब्दादेव तत्क्षमसाक्षात्कारनिष्पत्तये तत्प्रतिबन्धकासंभावनादिनिरासेन मननादेरुपयोगोपपत्तेः ।

एवं च श्रवणादेरपरोक्षज्ञानोद्देशेन विधानं मोक्षक्षमसाक्षात्कारोत्पत्ति-

१. संशयविपरीतज्ञान ।

प्रतिबन्धकनिरासेन तदनुकूलत्वमात्रविषयं द्रष्टव्यम् । इतरथा तस्य ज्ञानसामान्यहेत्वतिरिक्तश्रवणादिविशेषकारणजन्यत्वे स्वतःप्रामाण्यहानात् । तथा चोक्तम्—"पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविदः । अनपेक्षतामनुपरुध्य गिरः फलवद्भवेत्प्रकरणं तदतः ॥" इति । तथा चतुर्थवर्णके पञ्चपादीकृद्भिर्विवरणकारैश्च श्रवणादीनां प्रतिबन्धनिरासित्वमेव न वाक्यार्थधीहेतुत्वमिति सप्रपञ्चमुपपादितम् ।

तत्र श्रवणेन वेदान्तानामुपक्रमादिलिङ्गैरखण्डाद्वितीयवस्तुनि तात्पर्यावधारणानुकूलव्यापाररूपेण तात्पर्यावधारणद्वारा तात्पर्याज्ञानसंशयादिरूपप्रतिबन्धो निवर्तते । मननेन तु वेदान्तानुगुणलौकिकवैदिकानेकयुक्त्युपस्थापकमानसव्यापाररूपेण द्वैतग्राहिमानान्तरतदनुगुणतर्काधीना वेदान्तार्थासंभवविषया द्वैतसंभवविषया च धीर्वाक्यार्थे सत्तावधारणप्रतिबन्धिका निवर्तते । निदिध्यासनेन तु निश्चिताखण्डवाक्यार्थमात्रविषयनिरन्तरचित्तवृत्त्युत्पादकव्यापाररूपेणाभीष्टवस्तुविषयवासनाप्रकर्षरूपचित्तैकाग्र्यहेतुना पूर्वोक्तासंभवादिधीसंततिनिमित्ता द्वैतवासना चित्तविक्षेपात्मिका फलवदपरोक्षधीप्रतिबन्धिका निवर्तते ।

एवं विशिष्टाधिकारिणो विधिवदनुष्ठितश्रवणादिभिः समस्तप्रतिबन्धनिरासे सति तत्त्वमादिवाक्यादेव तत्त्वावेदकादपरोक्षाध्यासात्मकाविद्यातत्कार्यरूपबन्धनिवर्तकापरोक्षज्ञानोदय इति सिद्धम् । तदुक्तं देवर्षिणा बृहन्नारदीये—"तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् । ज्ञाने त्वनाहते सिद्धे सर्वं ब्रह्ममयं भवेत् ॥" इति ।

ननु श्रवणादीनां पृथक् पृथक् प्रतिबन्धनिरासेन फलवज्ज्ञानानुकूलत्वे समाने कथं फलोपकारिमनननिदिध्यासनाङ्गितया श्रवणप्राधान्यं वृद्धैरुक्तमिति चेत् । न । तैरेव "लक्षणया मीमांसया निर्णयः क्रियत

१ पञ्चपादिकायां पृ. ६९ पं. २१ ।

इति उच्यते" इति पञ्चपादीवाक्ये लक्षणयेत्यस्य "उपचारेणे"ति व्याख्यातत्वाच्छ्रवणस्य मुख्यमङ्गित्वं न तेषामभिमतं किन्तु तत्त्वसाक्षात्कारकरणवेदान्ततात्पर्यनिर्णयहेतुतया परंपरया करणसंबन्धात् करणकोटावनुप्रवेशमङ्गीकृत्याङ्गित्वमुपचारादुक्तमित्यलं प्रसक्तानुप्रसक्त्या ।

यदुक्तं "मनसैवानुद्रष्टव्यम्" इत्यादिश्रुतिपर्यालोचनया श्रवणादिसंस्कृतं मन एव तत्त्वसाक्षात्काररकरणमिति तदयुक्तम् । पूर्वोक्तश्रुतिस्मृतिभ्यां परिशेषादनुमानाच्च समस्तवृत्तिज्ञानधर्मितया प्रमातृकोटिपातित्वेन सिद्धस्य मनसो ज्ञानमात्रोत्पत्तौ करणत्वायोगात् । जीवस्वरूपस्य सदा स्वप्रकाशतया स्फुरणात् । अहङ्कारतद्धर्माणां केवलसाक्षिभास्यत्वात् । अहमाकारवृत्तेरप्यज्ञातविषयाभावेन ज्ञानाभासत्वात् । ज्ञानाश्रयाहङ्कारस्य युगपदनेकज्ञानसामर्थ्याभावकल्पनयैव युगपद्बाह्यविषयानेकज्ञानानुत्पत्त्युपपत्तौ तदर्थं साधारणकारणमात्रस्य क्रमकारिणो मनसः कल्पनानुपपत्तेः । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात् । ततश्च मनसः प्रमाकरणत्वाभावेन तज्जन्येऽपि ज्ञाने प्रमात्वानुपपत्तिः । उक्तविधया श्रवणादीनां तत्त्वज्ञानकारणत्वाभावेन तदुत्पत्तौ तेषां मनःसहकारित्वमप्यनुपपन्नमेव । क्वचिन्मनसःकरणत्वेन निर्देशस्तु वह्निना अयो दहतीतिवत् आत्मनि स्वधर्मारोपनिमित्ततयाप्युपपद्यते ।

अत एव "मनसा ह्येव पश्यति मनसा शृणोति" इत्यत्रावधारणेन चक्षुरादिनिवारणायोगात् आत्मा मनसैवोपाधिना द्रष्ट्रादिभावं भजते, न स्वत इति गम्यते । "ध्यायतीव" इत्यादिश्रुतिरपि उक्तमेवार्थं गमयति । ब्रह्मसाक्षात्कारे एव मनसः करणत्वकल्पनं तु कल्पकाभावात् मानान्तरव्यावृत्तिफलकौपनिषदत्वविशेषणविरोधाच्चायुक्तम् । "दृश्यते त्वग्र्यया बुद्ध्या" इत्यादिश्रुतिस्तु बुद्धेः कर्तृत्वेनाप्युपपद्यते ।

---

१ पञ्चपादिकाविवरणे पृ. १८१ पं. १८ ।

एवं च ध्यानजसाक्षात्कारस्य क्लृप्तप्रमाणाजन्यतयाऽनुपपन्नप्रामाण्यस्य मूलभूतश्रुत्यनुसंरणेन तदुपपादने तत्प्रामाण्यस्य स्वतस्त्वभङ्गप्रसङ्गात्, अपरोक्षे ब्रह्मात्मनि श्रुतिजन्यस्यापि परोक्षज्ञानस्य प्रामाण्यायोगाच्च परोक्षार्थविषयत्वमेव हि ज्ञाने परोक्षत्वं न तु जात्यादिरूपं तन्निरूपयितुं शक्यमित्युक्तम्। ततश्च परोक्षज्ञानप्रामाण्यं विषयपरोक्षाधीनं तद्रहितब्रह्मगोचरज्ञानेऽनुपपन्नमिति श्रुतिजन्यमपि परोक्षज्ञानं कथमपरोक्षे ब्रह्मात्मनि प्रमाणं स्यात् । तथा च तत्त्वमादिवाक्यजज्ञानमपरोक्षं अपरोक्षार्थविषयत्वात् घटादिप्रत्यक्षवत्, विपक्षे तत्प्रामाण्यानुपपत्तिरित्युक्तम् । न चेन्द्रियजन्यत्वमुपाधिः, नित्यापरोक्षज्ञाने दशमस्त्वमसीत्यादिवाक्यजन्यज्ञाने च साध्याव्याप्तेः । एवं च तत्त्वमादिवाक्यं परोक्षधीजनकमित्याद्यनुमानमप्रयोजकं व्यभिचारि चेति सिद्धं शब्दादेव ब्रह्मापरोक्षज्ञानं मुक्तिसाधनमिति ।

ननु तत्त्वमादिवाक्यादपरोक्षधीसंभवेऽपि कथं तत एवात्यन्तिकी बन्धनिवृत्तिः, श्रुतब्रह्मणोऽपि यथापूर्वं संसारदर्शनात् । अपरोक्षे ब्रह्मणि सर्वदा शब्दादपरोक्षज्ञानस्यैवोत्पत्तेस्तस्य विषयविशेषं विना कचिद्विशेषायोगात् । किञ्च द्वैतरूपबन्धस्य प्रत्यक्षादिप्रमाणैः कर्मोपासनाविधिभिश्चावेदितस्य सत्यस्य ज्ञानमात्रान्निवृत्त्ययोगात् अद्वैतश्रुतिविरोधेन द्वैतस्यानिर्वचनीयत्वकल्पनातो वरं भेदाभेदयोरविरोधकल्पनं, तदुभयप्रतीत्योः स्वतःप्राप्तप्रामाण्यापरित्यागात् । अत एव "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः," इति श्रुतिर्भेदज्ञानस्यापि मुक्त्युपायत्वं दर्शयति । तथा "तान्याचरथ नियतं सत्यकामाः," "सत्येन लभ्यस्तपसा ह्येष आत्मा," "क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः" इत्यादिश्रुतयः कर्मणामपि मोक्षहेतुत्वमावेदयन्ति । ततश्च द्वैतैकत्वविज्ञानादेव कर्मसचिवाद्वास्तवस्यापि बन्धस्यात्यन्तिकनिवृत्त्युपपत्तिरिति ।

अत्रोच्यते । "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरम्" इत्यादिनाचार्याधीनात्तत्त्वमसिवाक्यार्थज्ञानान्मुक्तिमुक्त्वा तदर्थस्यैव "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति सत्यत्वं परामृश्य सत्याभिसन्धस्यैव सा मुक्तिर्न त्वनृताभिसन्धस्येति व्यवस्थां तप्तपरशुग्रहणदृष्टान्तेनोपपादयति "पुरुषं सोम्योत हस्तगृहीतं" इत्युपक्रम्य "सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते" "स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते स यथा तत्र नादाह्येत" इत्याद्या श्रुतिः । तत्र द्वैतस्यापि सत्यत्वे कस्याप्यनृतसन्धस्याभावादुक्तव्यवस्थाश्रुतिरनर्थिका स्यात् । भेदाभेदयोश्च सर्वत्राविरोधाङ्गीकारे लोकसिद्धभ्रान्तिबाधव्यवस्था च न स्यात् । किञ्च भेदाभेदयोर्वस्तुमात्रत्वे तद्वाचकानां वस्तुवाचकानां च शब्दानां पर्यायत्वापत्त्या सहप्रयोगो न स्यात् । भेदस्य वस्तुमात्रत्वे तत्प्रतीतेः प्रतियोग्यपेक्षा च न स्यात् । दूरस्थवनस्पत्योरपि स्वरूपेण गृह्यमाणयोर्भेदादिविषये संशयो विपर्यासो वा न स्यात् । पदार्थस्वरूपमात्रस्य चात्यन्ताभेदवादिभिरप्यङ्गीकारात्तन्मतसाङ्कर्यापाताच्च । वस्तुनो वा भेदमात्रत्वे प्रतियोग्यादिप्रतीतिसापेक्षा वस्तुप्रतीतिः स्यात् । ततश्चानवस्थया नैकमपि वस्तु सिद्ध्येत् । भेदाभेदयोर्वस्तुधर्मत्वे च तयोः परस्परविरुद्धस्वभावत्वे नैकत्र समावेशः स्यात् । न हि संभवति विरुद्धस्वभावयोः शीतोष्णस्पर्शयोः क्वचिदसमावेशः क्वचित्समावेश इति । तयोरविरुद्धस्वभावत्वे च भेदाभेदकोटिकसंशयस्तद्विपर्ययस्तदन्यतरनिश्चयादन्यतरबाधश्च न स्यात् । अभेदाविरुद्धविषयशब्दप्रत्यययोर्वस्तुमात्रवृत्त्युभयसंमतधर्मविषयत्वेनाप्युपपत्तावत्यन्ताभेदविरोधिभेदे मानाभावादद्वैतमेव तत्त्वमितिमताविरोधाच्च ।

किञ्च, न तावद्वैधर्म्यं भेदः । विविधधर्मत्वरूपस्य तस्य घटे रूपरसादिवदत्यन्ताभेदेऽपि संभवात् । विरुद्धधर्मवत्त्वं तदिति चेत् । तत्किमभिन्नानाश्रितत्वं विरुद्धत्वं धर्माणां, भिन्नाश्रितत्वं वा, परस्परात्यन्ताभावसमानाधिकरणत्वं वा । नाद्यः, भेदाभेदमते तदसंभवात् । मतान्तरेऽपि धर्मिभेदं विना धर्माणामभिन्नानाश्रितत्वरूपविरोधासिद्धेः । अत एव न द्वितीयः । तस्य धर्मिगतभेदान्तरापेक्षत्वेनानवस्थापाताच्च । नापि तृतीयः । चित्रपटादौ युगपदुत्पद्यमानानां नानारूपाणामेकाकाशाश्रितनानादेशीयशब्दानां पादे मे वेदना शिरसि मे सुखमित्यनुभूयमानसुखदुःखादीनां च परस्परात्यन्ताभावसमानाधिकरणत्वेऽपि धर्म्यभेदवत्सर्वत्र धर्माणां धर्म्यभेदेऽपि परस्परात्यन्ताभावसादेश्योपपत्तौ केवलभेदवादविरोधात् । धर्मेष्वपि भेदसिद्धेः पूर्वं परस्परभावस्यैव दुर्निरूपत्वाच्च । एतेन वैलक्षण्यं भेद इत्यपास्तम् । असाधारणधर्मस्य लक्षणत्वादसाधारणत्वस्य च तदन्यावृत्तित्वे सति तद्वृत्तित्वरूपस्य भेदनिरूपणाधीनसिद्धित्वेन चक्रकापाताच्च । पक्षद्वयेऽपि धर्मलक्षणानवस्थापाताच्च ।

नापि पृथक्त्वं भेदः । तस्य गुणत्वे गुणादिषु तदभावेन भेदाभावापातात् । सामान्यादिरूपत्वे च तेष्वेव तदयोगात्स एव दोषः । भावपदार्थत्वे च वैशेषिकनैयायिकयोरपराद्धान्तापत्तिः । अन्येषामपि मते तस्य प्रतिवस्तुभेदे वस्तुनोऽपि भेदे प्रतिव्यक्त्यनन्ताप्रामाणिकभेदकल्पनापातात् । पृथक्त्वस्य च सर्वत्रैकत्वे तस्य सर्वधर्मिप्रतियोगिकस्य केवलान्वयितया तदभावरूपाभेदस्य कुत्राप्ययोगात्तद्गोचरप्रत्यभिज्ञाप्रामाण्यं क्वापि न स्यात्, स्याच्च भेदभ्रमस्यापि प्रामाण्यम् । तद्बाधकत्वेनाभिमतप्रत्यभिज्ञाया एव विषयाभावादप्रामाण्यात् ।

नाप्यन्योन्याभावो भेदः । तस्यापि सर्वत्रैकत्वे केवलान्वयित्वापातेना-

नन्तरोक्तदोषतादवस्थ्यात् । प्रतिप्रतियोगि तस्य भेदे च तद्धर्मी निरूपणीयः । तदनिरूपणे च भेदप्रत्ययेषु प्रमात्वाप्रमात्वविभागायोगात् । न च वस्तुमात्रं तद्धर्मि, प्रतियोगिनोऽपि तद्धर्मित्वापातेन तत्रापि तद्भेदबोधस्य प्रमात्वप्रसङ्गात् । तर्हि प्रतियोग्यतिरिक्तं भेदधर्मीति चेत् । न । प्रतियोग्यतिरिक्तपदेन तद्भेदाश्रयस्यैवोक्तत्वात् । स्वस्यैव स्वाश्रयतानियामकत्वोक्त्यावात्माश्रयत्वप्रसङ्गात् । न च घटप्रतियोगिकभेदद्वयमस्ति येनैकभेदवत्यपरभेदो व्यवस्थाप्येत । तदभ्युपगमेऽपि भेदान्तरस्याप्याश्रयः क इति पृच्छायां यदि प्रथमभेदवानित्युच्येत तदा परस्पराश्रयत्वापत्त्यैकस्याप्याश्रयो निरूपितो न भवेत् । द्वितीयभेदाश्रयानियामकतया तृतीयभेदोपगमे च तदाश्रयोऽपि यदि प्रथमादिना नियम्येत चक्रकाद्यापत्तिः स्यात् । चतुर्थपञ्चमादिभेदाभ्युपगमेन तृतीयचतुर्थादिभेदाश्रयनिरूपणे चानन्तभेदग्राहिमानाभावादुत्तरोत्तरभेदाश्रयानिरूपणे पूर्वपूर्वभेदाश्रयानिरूपणादाद्यभेदोऽप्यनिरूपिताश्रयो नैव सिध्येदिति वृद्धिं गृह्णतो मूलमेवोन्मूलितमितिन्यायापातः । तदुक्तं खण्डनकारैः—"प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् । अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता ॥" इति ।

एतेन तदीयासाधारणधर्मात्यन्ताभाववतस्तद्भेदाश्रयत्वमिति निरस्तम् । धर्मासाधारणत्वस्यैव धर्मिभेदनिरूपणाधीननिरूपणत्वेन प्रत्युक्तत्वात् । शब्दसुखाद्यत्यन्ताभावस्याप्याकाशादेस्तद्धर्मिप्रतियोगिकान्योन्याभावाश्रयत्वस्य परैरनङ्गीकृतत्वाच्च ।

एवं तत्प्रतियोगी च दुर्निरूपः । घटादिरेव तत्प्रतियोगीति चेत् । न । प्रतियोगिविरहात्मनोऽभावस्य प्रतियोगिसमानाधिकरणत्वायोगेन घटस्थितिकाले तदाश्रये तद्भेदाभावप्रसङ्गात् । संसर्गाभावस्यैव प्रतियोगिसामानाधिकरण्यं विरुद्धं, नत्वन्योन्याभावस्येति चेत् । न । प्रतियो-

गिभेदाभावे संसर्गाभावान्योन्याभावयोः साङ्कर्यमित्युक्तव्यवस्थायोगात्। न च तादात्म्यावच्छिन्नप्रतियोगिकोऽन्योन्याभावः, संसर्गाभावस्तु नैवमिति तयोर्भेद इति वाच्यम्। घटपटयोस्तादात्म्यासत्त्वेन तस्यावच्छेदकत्वायोगात्। किञ्च, तस्य प्रतियोगिस्वरूपत्वे तदवच्छेदकत्वासंभव एव, तदसाधारणधर्मस्य तत्तादात्म्यरूपत्वे च संसर्गाभावप्रतियोगिन्यप्यसाधारणधर्मस्यैवावच्छेदकत्वात्तस्यापि तादात्म्यावच्छिन्नप्रतियोगिकत्वात्कथं त्वदुक्ताभावभेदो वा घटेत।

यत्तु प्रतियोग्यारोपपुरःसरं योऽभावः प्रतीयते स संसर्गाभावः, प्रतियोगितावच्छेदकारोपपुरःसरं तु योऽभावः प्रतीयते सोऽन्योन्याभाव इति तयोर्भेद इति। तन्न। प्रतियोगिज्ञाने सति संनिकृष्टे धर्मिणि प्रतियोग्यनुपलम्भमात्रेणाभावबोधोपपत्तौ तादृशारोपभेदे मानाभावेन तदधीनलक्षणभेदायोगात्। न च कदाचिदयमिह न, कदाचिदयमयं नेति ज्ञानयोरयौगपद्याय तादृशारोपभेदः कल्पनीय इति वाच्यम्। तादृशारोपभेदे हेतुभेदक्रमादेवोक्तप्रतीतिक्रमोपपत्तौ मध्ये तादृशारोपभेदकल्पनावैयर्थ्यात्।

किञ्च, यदा प्रतियोगितावच्छेदकस्यैवारोपस्तदा मा भूत्प्रतियोगिनो घटादेः संसर्गाभावबोधः, तस्यैवावच्छेदकधर्मस्य संसर्गाभावबोधस्तदैव किमिति न स्यात्। तदारोपस्य तत्संसर्गाभावधीहेतुत्वस्य त्वयैवोक्तत्वादिति यत्किञ्चिदेतत्।

किञ्च, अन्योन्याभावाख्यो भेदः सर्वोऽपि धर्मिणो भिद्यते चेत् भेदधर्मिकभेदान्तरमापद्येत। तस्यापि धर्मिणो भिन्नत्वात्तद्धर्मिकं भेदान्तरमिति तत्तद्भेदधर्मिकाप्रामाणिकानन्तभेदानां तत्तत्प्रतियोगिकानन्तभेदानां च कल्पयतोऽन्धपरंपरातुल्यानवस्था स्यात्। भेदस्य स्वरूपमेव धर्म्यादेर्भेदः

इत्यनवस्था नेति चेत् । तर्हि घटादावपि तद्वदेव तत्तत्स्वरूपमेवावलम्ब्य भेदव्यवहारोपपत्तौ अन्योन्याभावरूपभेदकल्पनानर्थिका स्यात् । स्वरूप-भेदस्तु नाद्वैतविरोधीति प्रागेवोक्तम् ।

एवं भेदग्राहिप्रमाणमपि दुर्निरूपम् । तथा हि, किं घटपटौ परस्परं भिन्नाविति धीर्भेदसाधिका, किंवा घटः पटाद्भिन्न इति धीः, अथवा घटः पटो नेति धीः, घटपटयोर्भेद इति वा धीर्भेदसाधिका । नाद्यः, परस्पर-भावग्रहस्यैव भेदग्रहाधीनतयान्योन्याश्रयापातात् । भिन्नाविति च प्रत्य-यस्य भेदविशिष्टविषयत्वात्, परमते पूर्वं विशेषणीभूतभेदज्ञानाभावेन तदयोगाच्च । न च भेदगोचरं निर्विकल्पकज्ञानं तद्विशिष्टज्ञानात्पूर्वं कल्प्यत इति वाच्यम् । तस्य धर्मिप्रतियोग्यधीननिरूपणस्वभावस्य निर्विकल्पगो-चरत्वासंभवात्परेषामप्यभावे तदनङ्गीकाराच्च ।

किञ्च, विशेषणविशेष्ययोर्दूरस्थवनस्पत्योरिवाभेदनिश्चये तत्संशये वा विशेषणविशेष्यभावावगाहिज्ञानायोगात् । यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरितिन्यायेन विशेषणविशेष्ययोर्भेदनिश्चयो विशिष्टज्ञानहेतुरिति सिद्धत्वात् भेदभेदिगोचरविशिष्टज्ञानात्पूर्वं तयोर्भेद-निश्चयो वाच्यः । सोऽपि पूर्वोक्ताकारो विशिष्टगोचर एवेति तत्पूर्वं तद्गो-चरविशेषणविशेष्यभेदनिश्चयोऽन्यो वाच्य इति भेदनिश्चयानवस्थापत्त्या नैकोऽपि भेदनिश्चयः सत्तां लभेत ।

एतेन द्वितीयोऽपि कल्पः परास्तः । तस्यापि भेदविशिष्टगोचरस्यो-क्तन्यायेनासंभवात् । किञ्च पटाद्भिन्न इति पटावधिको भेदः प्रतीयते । पटस्य भेदावधित्वं नाम तत्प्रतियोगित्वमेवेति भेदप्रतीतौ तत्प्रतियोगितया पटप्रतीतिः, ततश्च तत्प्रतियोगिकतया भेदप्रतीतिरित्यन्योन्याश्रयग्रस्ता सा कथमात्मानं लभेत ।

नापि तृतीयः। घटः पटो नेति प्रतीतेस्तदुभयतादात्म्यनिषेधगोचरत्वे परमते घटपटनिरूपिततादात्म्यतदभावयोरसत्त्वेन तद्गोचरायास्तस्या अप्रामाण्यापातात्। एकत्रापरतादात्म्याभावगोचरत्वे तु तत्तादात्म्यस्य तत्स्वरूपत्वे वा तत्संसर्गाभावविषयत्वेनाप्युक्तप्रतीतेरुपपत्तेस्तद्विलक्षणपराभिमतभेदासिद्धेः। इतरथात्राप्येकस्य भेदं प्रति धर्मितयाऽपरस्य च प्रतियोगितया विषयत्वेऽनन्तरपक्षोक्तदोषानुषङ्गात्।

नापि तुरीयः। घटपटयोर्भेदप्रतीतेः पूर्वं तयोरित्युल्लेखायोगेनान्योन्याश्रयतापातात्। तत्र धर्मित्वप्रतियोगित्वयोरसाङ्कर्येणासिद्धेश्च तदपेक्षभेदसत्तायोगात्। किञ्च सर्वासामासां भेदधियां तत्तत्कालीनानिरूपितभेदग्राहित्वेऽपि त्रिकालाबाध्यत्वरूपतत्सत्तासाधकत्वायोगात् तत्त्वावेदनप्रामाण्योपेतश्रुतितात्पर्यगम्यपारमार्थिकाद्वैतानुरोधेन तासां नभोनीलिमचन्द्रप्रादेशिकत्वादिधीवद्व्यावहारिकमेव प्रामाण्यमुचितं कल्पयितुं, न तत्त्वावेदकत्वरूपम्।

तदेवं भेदस्वरूपतद्धर्मिप्रतियोगितद्ग्राहिमानानिरूपणात् "उदरमन्तरं कुरुते। अथ तस्य भयं भवति", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", "अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति" "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" "द्वितीयाद्वै भयं भवति" इत्यादिभेददर्शननिन्दाश्रवणात्, "नेह नानास्ति किञ्चन" "अथात आदेशो नेति नेति" "नात्र काचन भिदास्ति" "न ह्यस्ति द्वैतसिद्धिः" "इदं सर्वं यदयमात्मा" "सर्वं खल्विदं ब्रह्म" "एकमेवाद्वितीयम्" इत्यादिश्रुतिभिर्द्वैतसत्त्वनिषेधाद्वाचारम्भणादिशब्दाच्च दृश्यत्वाद्यनुमानोपोद्बलितात् द्वैतमिथ्यात्वसिद्धेश्च, भेदाभेदवादोऽत्यन्तभेदवादो वा नोपादेयः, किन्त्वत्यन्ताद्वैतवाद एव मुमुक्षुभिरुपादेयः।

तदवगतिरेव मोक्षोपाय इति सिद्धम् । एतेन भेदाभेदयोरविरोधकल्पनं वरमित्याद्यपास्तम् ।

यत्तु श्रुतब्रह्मणोऽपि यथापूर्वं संसारदर्शनात् ब्रह्मापरोक्षज्ञानमपि न मोक्षहेतुरिति, तन्न । श्रवणमात्रेण समस्तपुरुषापराधनिवृत्त्यभावात् श्रवणाद्यभ्यासप्रकर्षपर्यन्तजस्यैव तत्त्वसाक्षात्कारव्यक्तिविशेषस्य सर्वप्रकाराप्रामाण्यशङ्काशून्यस्य मुक्तिहेतुत्वोपगमात् तादृशयथापूर्वसंसारस्य दर्शयितुमशक्यत्वात् । अत एव "श्रवणायापि बहुभिर्यो न लभ्यः, शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः" "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः" "आश्चर्यवत्पश्यति कश्चिदेनम्" इत्यादिश्रुतिस्मृतयः श्रवणादिमतामपि प्रतिबन्धवतां फलपर्यन्तज्ञानाभावं तद्रहितस्य कस्यचिदेव तद्भावं च दर्शयन्ति । ततश्च तादृशतत्त्वसाक्षात्कारात्सनिदानानर्थनिवृत्तिरूपा मुक्तिः श्रुतिषु श्रूयमाणा न शक्या साहसमात्रेणापह्नोतुम् ।

यत्तु प्रत्यक्षादिप्रमाणेन भाव्यकरणेतिकर्तव्यतादिभेदापेक्षशास्त्रेण चावेदितद्वैतस्य सत्यस्य न ज्ञानमात्रबाध्यत्वमिति, तन्न । द्वैतग्राहिप्रत्यक्षादिमानस्यात्यन्ताबाध्यत्वरूपतत्त्वावेदनाक्षमस्योक्तत्वात् । भेदस्य च पूर्वोक्तरीत्या दुर्निरूप्यत्वात्, तत्त्वावेदकाद्वैतश्रुतिशतबाधितविषयत्वाच्च व्यावहारिकप्रामाण्ये व्यवस्थापनात् तदावेदितद्वैतस्य पारमार्थिकत्वायोगात् । मिथ्याभूतस्यापि जडप्रपञ्चस्याविद्यातिरिक्तदोषासमवहितसामग्रीजन्यतया शुक्तिरजतस्वप्नादिविलक्षणत्वेन स्वोचितनियतार्थक्रियाकारित्वमुपपद्यते ।

अत एव कर्मकाण्डस्यापि व्यावहारिकमेव प्रामाण्यं न तत्त्वावेदनरूपं, तस्य मानान्तरसिद्धक्रियाकारकफलभेदाश्रयणेन तदनुरूपानधिगत-

साध्यसाधनभावमात्रपरत्वेन तत्त्वावेदनाक्षमत्वात् । शब्दान्तरादीनामपि कर्मभेदप्रमाणानां व्यावहारिककर्मानुरूपभेदसाधकत्वान्न तत्त्वावेदकत्वम् । कर्मणां च श्रुत्येकगम्यानामपि "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इत्यादिश्रुतिस्मृतिप्रतिपन्नज्ञाननिवर्त्यत्वनिर्वाहायाविद्यकत्वकल्पनेन वास्तवत्वायोगात् । तस्मादद्वैतपरवेदान्तानामेव तत्त्वावेदकत्वम् ।

यदपि "जुष्टं यदा पश्यत्यन्यमीशम्" इत्यादिना भेददर्शनान्मुक्तिश्रवणात्तद्विषयभेदसत्यतेति तदप्ययुक्तम् । "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः" इति पूर्वार्द्धेन कार्यकरणसंघाततादात्म्यतद्धर्माभिमानेन तत्र मग्नस्य जीवस्य मोहवशादेवेश्वरात्मत्वाप्रतिपत्त्या शोकोपलक्षितं संसारमुक्त्वोत्तरार्द्धेन जुष्टमिति मग्नरूपमनूद्यान्यमिति तत्संघाताद्विलक्षणत्वोक्त्या सर्वोपप्लवरहिततया प्रत्यगर्थं परिशोध्य तमीशं यदा पश्यति तदा वीतशोक इतीश्वरभावाज्ञानाधीनशोकस्य तद्भावसाक्षात्कारादेव निवृत्तेरभिहितत्वादस्यापि मन्त्रस्याभेदपरत्वात् । न च "द्वा सुपर्णा" इति पूर्वमन्त्रे जीवपरयोर्भेदप्रतिपादनात् "समाने वृक्षे" इत्युत्तरमन्त्रोऽपि भेदपर इति वाच्यम् । जीवेश्वरभेदस्य लोकसिद्धत्वात् "उदरमन्तरं कुरुते" इत्यादिश्रुतिभिर्भेददर्शनस्यानर्थहेतुत्वप्रतिपादनाच्च द्वा सुपर्णेतिमन्त्रस्यापि भेदपरत्वायोगात् ।

किञ्च "ब्रह्मैवेदममृतं पुरस्तात्" इत्युपक्रम्य "ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" इत्यन्तेन पूर्वमन्त्रेण ब्रह्मणः सर्वात्मत्वमवधार्य ततः पृथग्जीवस्य सत्त्वेन तदनुपपत्तिशङ्कायां द्वासुपर्णेत्ययं मन्त्रः पठ्यते । तत्र लोकसिद्धभेदौ जीवपरावनूद्य जीवस्य बुद्धितादात्म्येन परस्मादन्यस्य बुद्धिप्राधान्येन कर्मफलभोक्तृत्वं निर्दिश्य तस्यैव वस्तुतो बुद्धितादात्म्यरहिततया तदन्यस्य

वास्तवब्रह्मभावमभिप्रेत्य भोक्तृत्वादिसंसारधर्मनिराकरणेन कूटस्थस्वप्रकाश-चिन्मात्रत्वप्रतिपादनादयुक्ता भेदपरत्वकल्पना । अत एवोक्ताभिप्रायेणैवायं मन्त्रः पैङ्ग्यरहस्यब्राह्मणेन व्याख्यातः—"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वं, अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्यो अभिपश्यति ज्ञः । तदेत-त्सत्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः, तावेतौ सत्त्वक्षेत्रज्ञाविति, उक्तक्षेत्रज्ञतत्त्वं परमात्मैवे"ति । श्रीभगवानप्याह—"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।" इति । उक्ताभेदज्ञानादेव मोक्षो न भेदज्ञानादिति श्रुतिः स्पष्टमेव दर्शयति "तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" । "योऽन्यां देवतामुपास्तेऽन्योसावन्योऽह-मस्मीति न स वेद यथा पशुः" इत्याद्या । तस्माद्भेदज्ञानान्मुक्तिरिति मनोरथमात्रम् ।

यत्तु द्वैतैकत्वज्ञानात्कर्मसचिवात्संसारनिवृत्तिरिति तदयुक्तम् । भेदांश-ज्ञानस्य मुक्त्युपायत्वनिरासात् । "त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः" इत्यारभ्य "सर्वे एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति" इति कर्मणां पुण्यलोकफलत्वं ब्रह्मनिष्ठाया अमृतत्वफलत्वमिति विभागा-भिधानेन समुच्चयायोगात् । "न कर्मणा न प्रजया धनेन त्यागेनैके-ऽमृतत्वमानशुः" "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते-ऽयनाय" इत्यादिश्रुतिभिः कर्मणां मोक्षान्वयनिषेधेनात्मवेदनस्यैवामृतत्व-साधनत्वावधारणाच्च । "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इत्यादिश्रुत्या कृतकत्वानुमानानुगृहीतया कर्म-साध्यस्यानित्यत्वावधारणान्मोक्षस्यापि तथात्वेऽनित्यत्वापत्तेश्च । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "अपाम सोमममृता अभूम" इत्यादीनामर्थवादानामनुमानानुगृहीतोक्तश्रुतिविरोधेनापेक्षिकाक्षय्यत्वादि-

क्रमादाय विधिस्तुतिपरत्वात् । कर्मणां चाधिकारादितारतम्येनानुष्ठान-तारतम्यस्यावश्यंभावित्वेन सर्वेषु मुमुक्षुष्वेकरूपत्वायोगात्तत्साध्यमोक्षेऽपि तारतम्यं स्यात् । न च मोक्षस्य सातिशयत्वं मोक्षवादिभिरुपेयते ।

यास्तु "तान्याचरथ नियतं सत्यकामाः" इत्यादिश्रुतयः कर्मणां मोक्षसाधनत्वे प्रमाणत्वेनोदाहृतास्तासां पूर्वोक्तश्रुतियुक्तिविरोधाद्विविदिषावाक्येन च वेदानुवचनादीनां विविदिषायां विनियोगमभिधाय "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्युत्पन्नात्मविविदिषस्य संन्यासविधानसामर्थ्यात् "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति सूत्रोपात्तन्यायाच्च चित्तशुद्धिविविदिषाद्वारा कर्मणां मोक्षसाधनज्ञानं प्रत्यारादुपकारकत्वपरत्वमेव कल्पनीयम् । अत एव "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये" । "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।" "अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥" "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इत्याद्याः स्मृतयः कर्मणां चित्तशुद्धिद्वारा ज्ञाने पर्यवसानं दर्शयन्ति ।

किञ्च, न तावद्ब्रह्मभावलक्षणो मोक्षः कर्मसाध्यः । तस्यानादिसिद्धत्वात् । वस्तुतोऽन्यस्यान्यात्मत्वं तु कर्मशतेनापि न शक्यं साधयितुम् । नापि स्वाभाविकब्रह्मात्माभेदविषयाविद्यानिवृत्तिः कर्मसाध्या । तत्र तत्त्वसाक्षात्कारस्य दृष्टद्वारा निरपेक्षस्यैव समर्थत्वात् कर्मणामनुपयोगात् । अनिर्वचनीयाविद्यानिवृत्तेरधिष्ठानात्ममात्रत्वाच्च तस्याः सुतरां कर्मसाध्यत्वासंभवात् । तर्हि तस्या ज्ञानसाध्यतापि न स्यादिति चेत् । न । प्रागसत्त्वे सति तदुत्तरकालीनसत्त्वरूपतत्साध्यत्वस्य सत्कार्यवादेऽनिर्व-

चनीयकार्यवादे च काप्यभावादसतः कारणशतेनापि सत्त्वायोगाच्च । परमतेऽपि प्रायश्चित्तसाध्यदुःखप्रागभावपरिपालने तत्साध्यत्वाभावप्रसङ्गाच्च तदभावप्रयुक्ताभावप्रतियोगित्वे सति तदुत्तरकालवर्तित्वरूपतत्साध्यत्वस्यात्मरूपाविद्यानिवृत्तावपि वक्तुं शक्यत्वात् । तथाहि—आत्मरूपाविद्यानिवृत्तेरभावो भावरूपाविद्यैव, अभावाभावस्य भावरूपत्वाभ्युपगमात् । सा च स्वविरोधितत्त्वसाक्षात्काराभावप्रयुक्तस्थितिकत्वात् तदभावप्रयुक्ता । ततश्च तत्त्वसाक्षात्काराभावप्रयुक्ताविद्यारूपाभावप्रतियोगिभूताधिष्ठानात्मरूपाविद्यानिवृत्तिर्ज्ञानसाध्येति तदिच्छया तत्साधनज्ञानाय मुमुक्षुप्रवृत्तिरुपपद्यते ।

केचित्तु ब्रह्मभावस्याविद्यानिवृत्तेर्वा स्वतःसिद्धात्मरूपत्वेऽप्यविद्यादशायां कण्ठगतचामीकरान्वेषणन्यायेन ज्ञानसाध्यत्वभ्रमान्मुमुक्षुप्रवृत्तिरुपपद्यते । तत्त्वनिश्चये च संजाते साध्यसाधनभावादिसर्वो व्यवहारो बाध्यत इति न कांचन प्रवृत्तिरिति वदन्ति । सर्वथापि कूटस्थनित्यब्रह्मात्मभावलक्षणमोक्षस्य ज्ञानसाध्यत्वमविद्याधीनमिति न तस्य विकारित्वप्रसङ्गः । कर्मसाध्यत्वे तु मोक्षस्य वस्तुतो विकारित्वापत्त्या ध्रुवमनित्यत्वं प्रसज्येत ।

नापि दुःखात्यन्तनिवृत्तिरूपो मोक्षः कर्महेतुकः । तत्र शास्त्रीयकर्मणामुपयोगासंभवात् । उत्पन्नदुःखानां तत्तदनुभवैरेव नाशसंभवादनुत्पन्नदुःखनिवृत्तेः कर्मभिरपि दुष्करत्वात् । न च दुःखनिवृत्तेः स्वसमानाधिकरणदुःखप्रागभावासमानकालीनरूपात्यन्तिकत्वं कर्माधीनमिति वाच्यम् । तस्य तादृशसर्वदुःखोत्पत्तिं विनाऽसंभवात्तस्याश्च नानाविधदुरितसाध्यत्वात्तदर्थं मुमुक्षुणा तद्धेतुदुरितमेवाचरणीयमिति साधु समर्थितं मोक्षशास्त्रप्रामाण्यम् । एतेन परमते केवलतत्त्वज्ञानस्यापि उक्तमोक्षानुपयोगो वेदितव्यः ।

किञ्च दुःखप्रागभावानामेकैकात्मवर्तिनामपरिमितत्वे तेषां परिसमाप्ते-रसंभवादुक्तमोक्षस्तत्त्वज्ञानशतेनापि न स्यात् । तेषां च परिमितत्वेऽना-दिकालमारभ्योत्पन्नदुःखसंतत्यैव परिमितदुःखप्रागभावानां परिसमाप्ति-संभवात् तदसमानकालीनदुःखनिवृत्तिरूपो मोक्षः कस्यचिदयत्नसिद्धः स्यादिति तत्त्वज्ञानं तदनुपयोगि स्यात् ।

यत्तु तत्त्वज्ञानानन्तरमीश्वरोपासनोत्कर्षात्सार्वज्ञ्ये सति कायव्यूहसंपा-दनेनापरिमितानामपि दुःखप्रागभावानां तत्प्रतियोगिदुःखोत्पादकेन साक-ल्येन नाशादुक्तमुक्तिस्तत्त्वज्ञाननिदानेति, तत्तुच्छम् । उपासनातदद्दष्टयो-र्विध्यधीनानुष्ठानलभ्यत्वाद्विहितोपासनायाश्चारोपितरूपेणाप्युपपत्तेस्तत्त्व-बोधस्य तत्राप्यकिञ्चित्करत्वात्सर्वेषां मुमुक्षूणां मुक्तेः पूर्वं नियमेन पराभिमतं सार्वज्ञ्यं भवतीत्यत्र मानाभावाच्च । "तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति," "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे," "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इत्यादिश्रुतिस्मृतिभिर्विदुषो विनापि फलभोगं कर्मणां विलयाभिधानविरोधेन पराभिमतकायव्यूहादि-कल्पनायोगाच्च । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादि-स्मृतीनां दोषनिवृत्त्युद्देशेन प्रायश्चित्तविधानविरोधादुक्तश्रुत्यादिविरोधाच्च प्रायश्चित्तादिरहितकर्मविषयत्वात् ।

किञ्च, येन विदुषा पूर्वं ब्रह्महत्यादिप्रायश्चित्तमनुष्ठितं तस्मिन्ब्रह्मव-धादिसाध्यदुःखविशेषप्रागभावस्यावश्यकत्वात्तदुपशान्तये तेन पुनस्तत्प्र-तियोगिहेतुभूतब्रह्मवधाद्यनुष्ठेयं स्यात् । न चैतदुपपद्यतेऽङ्गीक्रियते वा केनचिन्मोक्षवादिना । तस्माद्दुःखादीनामुपादानभूतानिर्वचनीयानाद्यवि-द्यानिवृत्त्यैवात्यन्तिकी निवृत्तिः । सा च केवलादेव ब्रह्मात्मत्वसाक्षात्का-रादिति न तत्राप्रामाणिकानेककायव्यूहादिकल्पनावकाशः ।

नापि नित्यनिरतिशयसुखाभिव्यक्तिरूपे मोक्षे कर्मणामुपयोगः । तत्र नित्ये सुखस्वरूपे तदनुपयोगात् । तदभिव्यक्तिरपि ज्ञानमावरणनिरासो वा । आद्ये तस्य नित्यत्वे न साधनापेक्षा । आदिमत्त्वे च प्रमाणपरतन्त्रतया कर्मोपयोगः । प्रमाणप्रवृत्तेरपि श्रवणाद्यन्तरङ्गाधीनतया न तत्रापि साक्षात्कर्मणामुपयोगः । जन्यज्ञानस्य विनाशित्वेन तद्रूपमोक्षस्यापि विनाशप्रसङ्गात् । अनित्यज्ञानसंतानस्य संतानिव्यतिरेकेणानिरूपणात् । जन्यज्ञानस्य शरीरेन्द्रियादिसापेक्षत्वेन "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रवणात् संसाराविशेषापाताच्च । न द्वितीयः । तस्य सुखस्य जडत्वे तत्रावरणकल्पकाभावेन तदसत्त्वात् । स्वप्रकाशचिद्रूपत्वे च तस्य तटस्थस्य जीवं प्रति प्रकाशाप्रसक्त्या तत्राप्यावरणकल्पनायोगात् । न च तस्य जीवधर्मत्वं, धर्मधर्मिणोरत्यन्तभेदे गवाश्वादिवत् तद्भावानुपपत्तेः । समवायस्य समवायिभ्यां संबन्धान्तरवत्त्वेऽनवस्थापातात् । तदभावे च गुणगुणिनोः समवाय इति विशिष्टव्यवहारायोगात् । तदसंबद्धस्य गुणगुण्यादिभावव्यवस्थापकत्वेऽतिप्रसङ्गाच्च । समवायस्य समवायिभ्यां स्वरूपसंबन्धकल्पने च तत एव सर्वत्र विशिष्टव्यवहारोपपत्तौ समवायकल्पनाऽनर्थिका स्यात् । स्वरूपमात्रस्य चाविशिष्टधीसाधारणस्य संबन्धत्वायोगात् । तदतिरिक्तस्वरूपसंबन्धस्यानिरूपणात् । भट्टमतानुवर्तिभिस्तदनङ्गीकाराच्च । न च तादृशसुखस्य जीवात्मना तादात्म्यं संबन्ध इति वाच्यम् । तस्य वास्तवभेदाभेदरूपत्वे तदसंभवस्योक्तत्वात् । कल्पिततादात्म्येन धर्मधर्मिभावे वस्तुत आत्मन एव सुखप्रकाशसुखरूपतया तदवभासप्रसक्तौ तत्र भेदकल्पनया चिदात्मस्वरूपमनुसृत्यानतिशयानन्दांशाच्छादकत्वमघटितघटनापटीयस्या अविद्याया एव युक्तं नान्यस्य । ततश्च तन्निवृत्तिरूपा तदभिव्यक्तिः केवलतत्त्वसाक्षात्काराधीनेति घट्टकुटीप्रभातन्यायेनास्मदभिमतसिद्धिः ।

तदेवं पूर्वोक्तरीत्या चतुर्विधान्वयव्यतिरेकैः पञ्चोदाहरणोपात्तन्यायैश्च निरस्तसमस्तसंसारोपप्लवं सदानन्दचिन्मात्रं प्रत्यगात्मानं परिशोध्य तस्य निवृत्तनिखिलप्रतिबन्धैस्तत्त्वमादिवाक्यैः सत्यज्ञानानन्दानन्ताद्वयब्रह्मात्मतां समनुभूयान्तेऽत्यन्तनिवृत्ताविद्यातत्कार्यः परमां निर्वृतिं प्राप्य कृतकृत्यो भवतीति सिद्धम् ॥

महान्तमास्थाय महानुभावै-
रारम्भमादर्शितमुक्तिमार्गे ।
सारं समुद्धृत्य मया व्यदर्शि
जिज्ञासवे तल्लघुना श्रुतेन ॥

**इति श्रीपरमहंसपरिव्रांजकाचार्यश्रीमन्नृसिंहाश्रमपूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकनारायणाश्रमविरचितमद्वैतवेदान्तसारसंग्रहप्रकरणं समाप्तम् ॥**

# श्रुतिस्मृत्यादिस्थाननिर्देशः ।

| | |
|---|---|
| अक्षय्यं ह वै | शत. ब्रा. २.६.३.१ |
| अग्निहोत्रादि | ब्र. सू. ४.१.१६ |
| अत एवोपमा | ब्र. सू. ३.२.१८ |
| अत्रायं पुरुषः | बृह ४.३.९.१० |
| अथ येऽन्यथा | छांदो ७.२५.३ |
| अथ योऽन्यां देव | बृह १.४.१० |
| अथात आदेशो | बृह २.३.६ |
| अनादिमत्परं | गीता १३.१२ |
| अनीशया शोचति | मुण्ड ३.१.२ / श्वेता ४.७ |
| अपाम सोम | अथ. शिर ८ |
| अयमात्मानन्तरो | बृह ४.५.१३ |
| अविभक्तं च भूतेषु | गीता १३.१६ |
| अविभागेन | ब्र. सू. ४.४.४ |
| असङ्गो ह्ययं | बृह ४.३.१५.१६ |
| अस्मिँल्लोके | ? |
| आकाशवत्सर्वं | ? |
| आचार्यवान्पुरुषो | छांदो ६.१४.२ |
| आत्मनस्तु कामाय | बृह २.४.५,४.५.६ |
| आत्मेति तूप | ब्र. सू. ४.१.३ |
| आत्मैवाधस्ता | छांदो ७.२५.२ |
| आत्मैवास्य | बृह ४.३.६ |
| आभास एव च | ब्र. सू. २.३.५० |
| आश्चर्यवत्पश्यति | गीता २.२९ |
| इदं सर्वं यदय | बृह २.४.६,४.५.७ |
| इन्द्रो मायाभिः | बृह २.५.१९ |
| उदरमन्तरं | तैत्ति २.७ |
| उपचारेण | पं.पा.विवरणे पृ.१८१पं.१८ |
| एकमेवाद्वितीयं | छांदो ६.२.१,२ |
| एको देवः | श्वेता ६.११ |
| एतं ब्रह्मलोकं | छांदो ८.३.२ |
| एतमेव प्रव्राजिनो | बृह ४.४.२२ |
| एतावदेव मनुजैः | ? |
| एवमेवैषा माया | नृसिं. उत्त ९ |
| ऐतदात्म्यमिदं | छांदो ६.८.७ / ६.९.४इत्यादि |
| कतम आत्मेति | बृह ४.३.७ |
| कामः सङ्कल्पो | बृह १.५.३ |
| कृतं कृत्यं प्राप्तं | ? |
| क्रियावन्तः श्रोत्रिया | मुण्ड ३.२.१० |
| क्षीयन्ते चास्य | मुण्ड २.२.८ |
| क्षेत्रज्ञं चापि | गीता १३.२ |
| घटसंवृत(संभृत)माकाशं | ब्रह्मबिं १३ |
| चक्षुषो द्रष्टा | नृसिं. उत्त २ |
| चिद्धीदं सर्वं | नृसिं. उत्त ७ |
| जीवेशावाभासेन | नृसिं. उत्त ९ |
| जुष्टं यदा पश्य | श्वेता ४.७ |
| ज्ञानप्रसादेन | मुण्ड ३.१.८ |
| ज्ञानमुत्पद्यते | स्मृतिः ? |
| ज्ञानाग्निः सर्व | गीता ४.३७ |
| तत्त्वमस्यादिवा | बृहन्नारदीये |
| तदात्मानमेवावे | बृह १.४.१० |

# शुद्धिपत्रम्

| पृ. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५ | १४ | विशिष्यानुभवात् | विशिष्याननुभवात् |
| २९ | १५ | मुखादा | मुखादौ |